

# केनोपनिषत्

श्रीमच्छङ्कराचार्यकृतपदवाक्यभाष्याभ्यां

तथा

श्रीरंगरामानुजकृतप्रकाशिकया

च समेता


पंडित श्रीधरशास्त्रि पाठक

संस्कृताध्यापक डेक्कन कॉलेज


इत्येतैः

स्वनिर्मितया बालबोधिन्या समलंकृता




पुण्यपत्तनम्

ओरिएंटल बुक सप्लाइंग एजन्सी

१९१०

# PUBLISHER'S NOTE.

The Bombay University has prescribed for the B. A. Honours Course for the year 1920 Kena and Katha Upanishads with the Bhâshyas of Sankarâchârya and Ranga-Râmânuja. These two Commentaries have been already published separately in the Anandâshram Series and elsewhere but they together cost a good deal and were besides inconvenient for a comparative study as the student had to handle two separate Volumes for the purpose. To obviate this difficulty we have now published both the Bhâshyas together and have besides added a new and lucid Commentary by Mr. Shridhar Shâstri Pâthak of the Deccan College. This last Commentary will be found very useful for students whose difficulties have been all anticipated and explained in easy language, so that the Commentary fully justifies its name Bâlabodhinî. It must be stated however that the simplicity of the Bâlabodhinî has been attained after great effort and no pains have been spared to give in it appropriate extracts from Adhikarana-ratnamâlâ, Sâbara-bhâshya and other texts in order to throw light upon the many knotty points of Mîmâmsâ which abound in the Ranga-Râmânuja Bhâshya in particular.

In the Introduction the learned Shastri has given the leading views of Oriental scholars like Weber, Deussen, Regnaut and Max muller on the Upanishads in question, has refuted them where necessary, and has besides offered his own views based upon independent critical research. The Appendices form another useful feature of the volume. We hope therefore that our students and the world of Sanskrit scholars generally will show their appreciation of the learning and industry of Mr. Shridhar Shastri by purchasing this volume which is designed for them.

MANAGER.

Oriental Book-Supplying Agency,
13 Shukrawar, Poona City.

# अनुक्रमणिका




१ प्रास्ताविकम् । .... .... .... .... १—२१

१ वेदवेदान्तयोः सम्बन्धः .... .... .... १

२ उपनिषदः .... ... .... १

३ उपनिषदां स्वरूपम् .... .... .... ४

४ उमाहैमवतीशब्दयोर्विचारः .... .... ६

५ एतदुपनिषत्स्थोपासनाविचारः .... .... ८

६ पदभाष्यवाक्यभाष्ये .... .... .... ८

७ अद्वैतमतम् .... .... .... .... १२

८ विशिष्टाद्वैतमतम् .... .... .... १५

९ अद्वैतविशिष्टाद्वैतमतयोर्वैलक्षण्यस्य स्थलानि .... १७

१० प्रकाशिका ... .... ... .... १९

११ बालबोधिनी .... .... ... .... २०

२ केनोपनिषद्व्याख्यात्रययुता । .. .... .... १—४५

३ व्याख्यात्रये बालबोधिनी । ... .... ....४६—८४

४ व्याख्यात्रयगतवचसां लब्धालब्धक्रमेण सूचिः ....८५—९०




# अथ प्रास्ताविकं किंचित्।



## १ वेदवेदान्तयोः संबन्धः।

विदितमेवेदं विचारशीलानां यद्दुःखजिहासासुखपरीप्सानिमित्तं प्राणभृतां प्रवृत्तिस्तत्र प्रायो बहव ऐहिकसुखार्थमेव यतन्ते न पारलौकिकाभ्युदयश्रेयोनिमित्तम्। केचित्तु लौकिकसुखस्यानित्यतां निरूप्य पारलौकिकाभ्युदयार्थं प्रयस्यन्ति। परन्तु नाधिगच्छन्ति तदुपायम्। तन्निमित्तं परमेश्वरनिःश्वासभूतो वेदो यज्ञादिसाधनान्युपादिदेश। ततः स्वर्गादिपारलौकिकसुखमपि "यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिवचसा क्षयीति ज्ञात्वा केचन परमश्रेयःसाधनभूतं ब्रह्म जिज्ञासवो बभूवुस्तदर्थं वेदेनैव कासुचिदीशावास्याद्युपनिषत्सु मन्त्रान्तर्गतासु ब्रह्मोपदिष्टम्। परं मन्त्रभागस्याख्यायिकादिरहितत्वेन दुर्विज्ञेयत्वान्मन्त्राणां व्याख्यातृभिर्ब्राह्मणप्रणेतृभिस्तैस्तैर्महर्षिभिः कर्मकाण्डप्रतिपादनानन्तरमुपासनाद्यघटितास्तास्ता उपनिषदः समाम्नाताः। एवं चैतत्सिद्धं यन्मन्त्रात्मको योऽपौरुषेयो वेदभागस्तत्र विस्तरशो यज्ञादि कर्म प्राणायि यदर्थं सकलापि पूर्वमीमांसोपयुज्यते यां चासूत्रयद्भगवाञ्जैमिनिः 'अथातो धर्मजिज्ञासा' जै. सू. १।१।१ इत्यादिना। ततः परं संक्षेपतो वेदान्तविद्याप्रतिपादिन्य ईशाद्युपनिषदो मन्त्रभाग एवोक्ताः। अथच ब्राह्मणं—तैस्तैर्महर्षिभिः प्रणीतम्। तत्र पूर्वं कर्मकाण्डं व्याख्यातम्। ततः सुखबोधार्थमुपासनादिसाधनप्रतिपादनपुरःसरमाख्यायिकादृष्टान्तादिघटिता ब्राह्मणोपनिषदः पठिताः। यासांच मन्त्रब्राह्मणोपनिषदामसन्दिग्धार्थप्रतिपत्तये भगवान् बादरायणः "अथातो ब्रह्मजिज्ञासा" ब्र. सू. १।१।१ इत्यादीनि सूत्राणि प्रणिनाय। अतएवोक्तं भगवत्पूज्यपादैः श्रीशंकराचार्यैः "वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम्" ब्र. सू. शां. भा. १।१।२ इति।

## २ उपनिषदः।

उपनिषच्छब्दस्य तत्र तत्र श्रीमच्छंकराचार्यैरर्थः प्रदर्शितः। तथाहि कठोपनिषदि प्रस्तावनाभाष्ये—१।१।१ सदेर्धातोर्विशरणगत्यवसादनार्थस्यो-

पनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति । उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते । ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते । तथाच वक्ष्यति- " निचाय्य तं मृत्युमुखात्प्रमुच्यते " इति । पूर्वोक्तविशेषणान्मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्म गमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत् । तथाच वक्ष्यति— ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरिति । लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते—तथाच वक्ष्यति— स्वर्गलोका अमृतत्वं भजन्त इत्यादि । ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति । उपनिषदमधीमहे । अध्यापयाम इति च । एवं नैष दोषः । अविद्यादिसंसारहेतुविशरणादेः सादिधात्वर्थस्य ग्रन्थमात्रेऽसंभवाद्विद्यायां च संभवाद्ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः । आयुर्वै घृतमित्यादिवत् । तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्येति । मुण्डकोपनिषद्—१।१।१ प्रस्तावनायां—य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयति—अविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् । इति । अत्र केनोपनिषदि ४।३२ ' उपनिषदमब्रूम ' उपनिषदं—परमात्मविद्यामित्यर्थः कृतः । तैत्तिरीयोपनिषत् (२।९) भाष्ये " परं श्रेयोऽस्यां निषण्णमिति । तथा छान्दोग्योपनिषद्यष्टमाध्यायेऽष्टमखण्डे चतुर्थकण्डिकायां—उपनिषच्छब्देन ज्ञानमुच्यते—एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ।८।८।४ इति । एतदुपनिषदः—एतज्ज्ञानाः । तथा बृहदारण्यकोपनिषत्प्रस्तावनायाम्— " सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते " । एवं चैतत्सिद्धं संसारबीजविनाशिनी या विद्या सोपनिषच्छब्देन मुख्यया वृत्त्या बोध्यते । तादृशविद्याप्रतिपादकत्वा-

ल्लक्षणयेशावास्यादयो ग्रन्था अप्युपनिषच्छब्देन व्यवह्रियन्ते । ता उपनिषदश्चतुर्षु वेदेष्वष्टोत्तरशतसंख्याकास्तत्र द्वात्रिंशन्मुख्याः । तत्रापि दशैवेशादयो मुख्यतरास्तत्रापि माण्डूक्योपनिषन्मुख्यतमा । तथैव मुक्तिकोपनिषद्युक्तत्वात् । तथाहि ' माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये । तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ । तथापि दृढता नो चेद्विज्ञानस्याञ्जनासुत । द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय । विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ॥ ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा । ता एता अष्टोत्तरशतमुपनिषद् ऋग्वेदादौ कियत्यस्तासां शान्तिश्च केति तत्रोच्यते । तथाच—" ऐतरेयकौषीतकिनादबिन्द्वात्मप्रबोधनिर्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचानामृग्वेदगतानां दशसंख्याकानामुपनिषदां वाङ्मे मनसीति शान्तिः ॥ ईशावास्यबृहदारण्यकजाबालहंसपरमहंससुबालमन्त्रिकानिरालम्बात्रिशिखिब्राह्मणमण्डलब्राह्मणाद्वययतारकपैङ्गलभिक्षुतुरीयातीताध्यात्मतारसारयाज्ञवल्क्यशाट्यायनिमुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसंख्याकानामुपनिषदां पूर्णमद इति शान्तिः ॥ कठवल्लीतैत्तिरीयकब्रह्मकैवल्यश्वेताश्वतरगर्भनारायणामृतबिन्द्वमृतनादकालाग्निरुद्रक्षुरिकासर्वसारशुकरहस्यतेजोबिन्दुध्यानबिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्तिस्कन्धशारीरकयोगशिखैकाक्षराक्षावधूतकठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राणाग्निहोत्रवराहकलिसन्तरणसरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां सह नाववत्विति शान्तिः ॥ केनछान्दोग्यारुणिमैत्रायणिमैत्रेयीवज्रसूचिकायोगचूडामणिवासुदेवमहत्संन्यासावक्तकुण्डिकासावित्रीरुद्राक्षजाबालदर्शनजाबालीनां सामवेदगतानां षोडशसंख्याकानामुपनिषदामाप्यायन्त्विति शान्तिः ॥ प्रश्नमुण्डकमाण्डूक्याथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिंहतापनीनारदपरिव्राजकसीताशरभमहानारायणरामरहस्यरामतापनीशाण्डिल्यपरमहंसपरिव्राजकान्नपूर्णासूर्यात्मपाशुपतपरब्रह्मत्रिपुरातपनदेवीभावनाब्रह्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहयग्रीवदत्तात्रेयगरुडानामथर्ववेदगतानामेकात्रिंशत्संख्याकानामुपनिषदां भद्रं कर्णेभिरिति शान्तिः ॥"
मध्वाचार्यकृतव्यासत्रभाष्ये काषायणादयो बह्वय उपनिषदो निर्दिष्टास्ता मुक्तिकोपनिषदि न दृश्यन्ते । अधुनातनैर्विदेशीयैरुपनिषदां संख्या २३५ पर्यन्तमुच्यते ( Introduction Of Upnishads by Max Muller page LXVIII.)

## ३ उपनिषदां स्वरूपम् ।

प्रायो मुख्यासु दशसूपनिषत्सु ब्रह्मस्वरूपं, तत्प्रतिपत्तय उपासनाः काश्चित्स्वतन्त्रतया काश्चित्कर्माङ्गत्वेन, सुखबोधार्थमाख्यायिकाश्च तथा क्वचिज्जगदुत्पत्तिरपि समाम्नायते । कासुचिदुपनिषत्सु पूर्वोक्तानां सर्वेषां वस्तूनां समवायः कासुचित्केवलं ब्रह्मस्वरूपवर्णनं कासुचिदन्यवस्तुसत्त्वेऽप्याख्यायिका नास्ति कुत्रचिदुपासनाघटिताख्यायिकास्ति। एतत्सर्वं छान्दोग्यबृहदारण्यकेशादिषूपनिषत्सु समुपलभ्यते । एतत्तु सत्यं यद्ब्रह्मस्वरूपप्रतिपादनं विनोपनिषन्नास्तीति । सर्वेषां पूर्वोक्तानां वस्तूनां प्रकृतायां केनोपनिषदि सङ्ग्रहोऽस्ति तेन सर्वावयवविशिष्टेयमुपनिषत् । यतोऽत्र १–१३ पर्यन्तं ब्रह्मस्वरूपवर्णनं ततो ब्रह्ममाहात्म्यबोधिन्याख्यायिका १४–२८ ततस्तत्प्राप्तय आध्यात्मिकाधिदैविकोपासनाद्वयं ततस्तदर्थवादश्च । अत्र केचित् ( डायसनप्रभृतयो ) विद्वांस एतस्या उपनिषदो गद्यपद्यभेदेन विचारभेदेन च भागद्वयं स्यादित्यनुमन्वते । प्रतिपादयन्ति च यदत्र १–१३ पर्यन्तं नवममन्त्रापवादेन सर्वे छन्दोबद्धा मन्त्राः । १४।२८ पर्यन्तं गद्यरूपा मन्त्राः । एवं भागद्वयम् । तथा पूर्वभागे निर्विशेषब्रह्मप्रतिपादनं तत आख्यायिकाद्वारा सविशेषब्रह्मप्रतिपादनमित्यर्थभेदेनापि भागद्वयं प्रकल्पयन्ति । तथा तन्मतमेवमपि यत्तत्र भागत्रयमपि कर्तुं शक्यते तच्चेदृशम् १–१३ पर्यन्तं प्रथमो भागो निर्विशेषब्रह्मप्रतिपादकः । अयं भागः सर्वस्य वेदान्तस्य पूर्णतादशायां लिखितः स्यात् । निर्विशेषब्रह्मणो वर्णनात् । तेनायं नवीनः स्यात् । १४–२८ पर्यन्तं द्वितीयो भागः । अत्रालङ्कारिकरीत्या सविशेषं ब्रह्म प्रतिपादितं परब्रह्मणो देवानां च गौणप्रधानभावो वर्णितस्तेनायं भागो वेदान्तविचारस्य पूर्णतादशायाः प्रागेव निर्मितः स्यात् । एवंचायं पूर्वस्मात्प्राचीनः । ततस्तृतीयो भागः २९–३४ पर्यन्तमन्त्रप्रतिपादितः । अयं परिशिष्टवद्भाति । अत्र ब्रह्मणः कालातीतत्वमुपमया प्रदर्शितम् । ततो ब्रह्मविद्यार्थमुपनिषत्ततः फलश्रुतिः । एतेन ग्रन्थेनेमे विद्वांस एवं प्रतिपादयन्ति यदिमे भागास्त्रयो भिन्नैर्महर्षिभिर्भिन्नकालेषु रचिता इति । परं तदेतद्वेदप्रतिपादनशैल्यनभिज्ञताविलसितम् । यतो वेदे सर्वत्र कर्मकाण्डादौ पूर्वं विधिः प्रतिपाद्यते ततोऽर्थवादस्तन्माहात्म्यबोधकस्ततस्तदितिकर्तव्यतां द्योतयितुं साधननिर्देशः । यथा वायव्यं श्वेतमालभेतेति विधिः । ततो वायर्वै क्षेपिष्ठा देवतेत्यर्थवाद इत्यादि । एवं कर्मकाण्डविधिवदेवोपनिषद्यपि

पूर्वं ब्रह्म प्रतिपाद्यते ततस्तन्माहात्म्यद्योतकोऽर्थवादस्ततस्तदुपासनं यथाच छान्दोग्योपनिषदि षष्ठाध्याये पूर्वं सदेव सौम्येत्यादिना सद्ब्रह्मणः प्रतिपादनं ततस्तन्माहात्म्यद्योतनार्थमेव जगदुत्पत्त्यादि पश्चादुपासनं तदर्थवादश्च । अत्र छान्दोग्योपनिषदि यथा कालभेदः कर्तृभेदो वा वक्तुं न शक्यते । उपक्रमोपसंहाराभ्यां सत्प्रकरणस्य निश्चितत्वात् । तद्वदत्र केनोपनिषदि ब्रह्मण एवोपक्रमोपसंहाराभ्यां प्रकृतत्वान्न कालभेदः कर्तृभेदो वा कल्पयितुं शक्यः । उपक्रमादिप्रतीत्यर्थं संक्षेपतः केनोपनिषद्गतोऽर्थः प्रदर्श्यते । तथाहि—प्रश्नप्रतिवचनरूपया श्रुत्या केनेषितमित्यादिना मनःप्रभृतीनामिन्द्रियाणां प्रेरकं किमिति पृष्टे यन्मनसो मननशक्तिप्रदं तत्प्रेरकमित्युत्तरितम् । तत्स्वरूपं चक्षुरादिना ज्ञातुमशक्यम् । किंच तदुपास्यब्रह्मातिरिक्तमित्यपि कथितम् । ततः श्रुतिकल्पितशिष्यं प्रति गुरुणोच्यते ब्रह्म ज्ञायते मयेति यदि त्वयोच्येत तर्हि तदज्ञानम् । यतो ब्रह्मणो निर्विशेषणत्वात्तज्ज्ञाधातोः कर्म भवितुं नार्हति । ब्रह्मात्मस्वरूपेण ज्ञातत्वादज्ञातमित्यपि वक्तुं न शक्यते । अतो ज्ञाताज्ञातादुपरि व्यतिरिक्तं ब्रह्मेति प्रतिपाद्यते । एतादृशं ब्रह्मावश्यं स्वाभेदेन ज्ञेयमन्यथा महती हानिः । ज्ञाते च तस्मिन्नमृतत्वप्राप्तिः । अथच तस्य ब्रह्मणो दुर्विज्ञेयताप्रदर्शनार्थमग्न्यादिदेवतानामाख्यायिका । सा चेत्थम्-ब्रह्मासुरान्पराजित्य देवानां जयं कृतवत् । स चायं जयोऽस्माकमेवेति मन्यमानानां तेषां देवानां पुरतस्तद्ब्रह्म प्रादुर्बभूव । तदजानन्तस्तेऽग्निं प्रेषयामासुर्ब्रह्मसमीपे । तदा तेन तृणदाहे प्रेरितोऽग्निर्न शशाक । तद्वदेव वायुरपि तत्तृणमादातुं न शशाक । तत इन्द्रो जगाम परमिन्द्रसमीपात्त-त्तिरोबभूव विशेषतस्तदभिमानं निहन्तुम् । अथोमारूपिणी विद्या प्रादुर्बभूव । तया बोधित इन्द्रो ब्रह्म जज्ञौ । अनन्तरं तद्ब्रह्मप्राप्तये तद्वनं नामेत्युपासना तत्साधनं च तपो दम इत्यादि । अन्ततोऽर्थवादो ब्रह्मज्ञानविषयक एव । एतावतात्र ब्रह्मण एव प्रतिपादनम् । तत्र भागकल्पनं कालव्यवस्था च न रुचिरेति विद्वांसो जानीयुरेव । गद्यपद्यभेदेन प्रकरणभेदकल्पनाप्यविचारितरमणीया । विनिगमनाविरहात् । बहुषूपनिषत्सु प्रकरणैक्येऽपि गद्यपद्यभेदो दृश्यते । अत्रोपनिषदि 'नचेदिहावेदीन्महती विनष्टिः' इति वच उपलभ्यते तथा बृहदारण्यकेऽपि । तेन केनोपनिषदि बृहदारण्यकादागतमेतद्वाक्यमथवा बृहदारण्यके केनोपनिषद आगतं द्वाभ्यां वा तृतीयतो गृहीतमिति केचित् ( रेंज्रों ) परमर्थसाम्येऽभिप्रायसाम्ये वा शब्दसाम्यमपरि-

हार्यमेवेति वयं प्रतीमः । नत्रान्यतो ग्रहणमेषां शब्दानामिति दुर्निरूपम् । किंच यत्रान्यत्रत्यं वच उदाह्रियते तत्र तदुक्तमृषिणेत्यादि ब्राह्मणे समाम्नायते। यथा छान्दोग्योपनिषदि पञ्चमाध्याये द्वितीयखण्डेऽष्टममन्त्रः । तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने'' इति । यथा वा—ऐतरेयब्राह्मणे तदप्येष श्लोको भवति। मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विश्वे देवाः सभासदः । इति । इयं च केनोपनिषद्ब्राह्मणग्रन्थगतेति पूर्वमुक्तमेव। किंचैवमप्येते ( रेजों) संमन्वते यदत्रोपनिषद्युमाहैमवतीशब्ददर्शनादियं केनोपनिषच्छैवी । सर्वासां शैवीनामुपनिषदामथर्ववेद उपलभ्यमानत्वादियमप्यथर्ववेदीयेति । परमेतत्सर्वं रभसात् । यतः केवलमुमाहैमवतीतिशब्दौ न शैवत्वसाधकौ । शैवशब्दः 'सास्य देवता ' इति पाणिनिसूत्रेण साधयितुं शक्यते । एवंच शिवो देवता अस्या इति शैवी । ततः शिवमाहात्म्यप्रतिपादिनी शैवोपयोगिरुद्राक्षादिप्रतिपादिन्येवोपनिषच्छैवोपनिषदिति वक्तुं शक्यते न केवलमुमाहैमवतीतिसमानानुपूर्वीकशब्दघटितत्वं शैवत्वसाधनायालम् । उमाहैमवतीत्यनयोर्यथा भिन्नार्थकत्वं तथाग्रे प्रतिपादयिष्यामः । किंच शैवोपनिषदोऽथर्ववेद एव सन्तीत्यपि न वक्तुं शक्यं यतः शैवागमोपयोगिरुद्राक्षजाबालोपनिषत्सामवेदीया। आप्यायन्त्विति तस्याः शान्तेर्दर्शनात् । मुक्तिकोपनिषदि सामवेदीयत्वेन परिगणनाच्च । एतेनान्योऽपि ( रोअर ) विद्वान्यदस्या अथर्ववेदगतत्वं ब्रूते तदपि प्रत्युक्तम् । सामवेदे भिन्नः संख्यागणनप्रकारोऽथर्ववेदे भिन्नः सः । अतएवाधुनातनपुस्तके द्विधैव संख्या मुद्र्यतेऽतो वेदद्वयगतत्वमस्या उपनिषद इति यत्तदपि न विचारकोटिमाटीकते । लेखककौशलमूलत्वात्संख्याभेदस्य । केनचित्संख्यारम्भतो लिखिता केनाचिल्लेखकेन प्रतिखण्डं भिन्नैव संख्या समादृतेति । अथ केनोपनिषच्छङ्कराचार्यैर्नवमाध्यायस्थेति प्रस्तावनायां लिखितं तदधुनातनपुस्तकैर्विसंवदति । तस्य पञ्चमाध्याय उपलभ्यमानत्वादिति बहुभिः ( डॉ. बर्नेल ) प्रभृतिभिः प्रतिपाद्यते तद्विषये तु पुस्तकानधिगमादस्माभिर्जोषंभावः समाश्रीयते । पुस्तकाधिगमे प्रयत्नस्तु प्रसरत्येव । अधिगते लिखितपुस्तके पूर्वोक्तविषयं स्वाभिप्रायं प्रदर्शयिष्यामः प्रसङ्गान्तरेण ।

### ४ उमाहैमवतीशब्दयोर्विचारः ।

अनयोर्व्याख्यानप्रसंगे पदभाष्य एवं निर्देशः । ' स इन्द्रस्तामुमां

बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमा विद्या तदा बहुशोभमानेतिविशेषणमुपपन्नं भवति । हैमवती हेमकृताभरणावतीमिव बहुशोभमानामित्यर्थः । अथवोमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तत इति ज्ञातुं समर्थेति कृत्वा तामुपजगाम ।

वाक्यभाष्य एवं—यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसीत्तिरोधानं च तस्मिन्नेव स्त्रियमतिरूपिणीं विद्यामाजगाम । अभिप्रायोद्बोधहेतुत्वाद्रुद्रपत्न्युमा हैमवतीव सा शोभमाना विद्यैव । विरूपोऽपि विद्यावान् बहु शोभते ।

अनयोः पदवाक्यभाष्ययोरुमाशब्दस्यार्थो ब्रह्मविद्यैव तेजस्विनीति साधितम् । मेदिनीकोशे—उमाशब्दस्यार्थेषु कान्तिरित्यर्थः प्रदर्शितस्तेन कान्तिमती विद्योमाशब्देन लक्ष्यते । किं चावतीत्युमेति शब्दकल्पद्रुमोक्तनिरुक्तिरपि रक्षित्र्या विद्याया एव ग्रहणं प्रयोजयति । अत्र चाख्यायिकायामिन्द्रादीनां गर्वनिवृत्तिद्वारा रक्षणस्य द्योतितत्वात् । अत्रेदं ध्येयम् । यदेन्द्रसमक्षं ब्रह्म तिरोभूत्तदा विमनायमानेनेन्द्रेण मनस्यालोचनात्मकं तपस्तेपे तदा तस्य मनसीदं यक्षं ब्रह्मैवेति प्रत्यभात् । तेन ब्रह्मज्ञानात्प्राङ्ममेन्द्रस्य विजय इति याभिमानवती बुद्धिरासीत्तस्या नाशेन ब्रह्मज्ञानमिन्द्रेण संपादितम् । तदेव रूपकालंकारमादृत्य श्रुत्या स्त्रियमुमां बहुशोभामानामित्यादिना समाम्नायते । सर्वत्रैवेयं परिपाटी यदालोचनात्मकं तपस्तप्यमुपासकेन विचारशालिना ततो ब्रह्मादिबुद्धिरिति । एतच्च सुस्पष्टं ज्ञायते तैत्तिरीयोपनिषद्वाक्यसमुदायतः । तथाहि—स तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । इत्यादि । तस्मिन्नेवाकाशे स्त्रियमाजगामेत्यत्र तस्मिन्नेवेत्यनेन यत्र तिरोभूतं यक्षं (ब्रह्म) तत्रैवेन्द्रेण तपो विचारापरपर्यायमनुष्ठितम् । ततस्तत्रैव विद्याप्राप्तिः । नतु काचित्स्त्री यक्षेण स्थापितेन्द्रेण दृष्टेति वक्तुमर्हम् । हैमवतीमित्यनेन हेमकृताभरणवतीमिवेति पदभाष्यकृतः प्रथमोऽर्थ एव श्रेयान् । बहुशोभमानामिति विशेषणस्वारस्यात् । यतोऽलङ्कारैः स्त्रीणां शोभा प्रसिद्धैव । अथवेत्यनेन प्रदर्शितस्य द्वितीयार्थस्य ‘ हिमवतो दुहिता हैमवती ’ इत्यस्य स्वीकारे बहुशोभमानेति विशेषणस्य निरर्गलत्वं संपद्येत । अयं द्वितीयोऽर्थः पौराणिकी या हिमवतो दुहिता पार्वतीति कल्पना तामुपजीव्य प्रवृत्तः । सच भगवत्पूज्यपादैराद्यश्रीमच्छङ्कराचार्यैर्नाङ्गीकर्तुं शक्यते । आचार्यान्तरवत् पौराणिककल्पनामादृत्य तैः कुत्रापि ब्रह्मसूत्रभा-

प्यादौ श्रुत्यर्थस्य सूत्रार्थस्य वानङ्गीकृतत्वात् । एवं चायमर्थोऽन्यकृतो लेखकप्रमादाद्भाष्यशरीरे प्रविष्ट इव भाति । यतश्छान्दोग्योपनिषद्भाष्ये तृतीयेऽध्याये दशमखण्डे छान्दोग्योक्तसूर्यपरिवर्तनविषये 'पौराणं दर्शनम्' इत्युक्त्वा 'अत्रोक्तः परिहार आचार्यैः' इत्युक्त्वान्येषामाचार्याणां मतं विरोधपरिहारार्थं प्रदर्श्यते स्वयं तद्विषयेऽरुचिः प्रदर्श्यते । तेन पुराणविरोधपरिहारविषये स्वयमाचार्याणां न प्रवृत्तिरिति प्रतीयते । यतस्तेषां श्रुतिविरुद्धपुराणवचस्स्वनादर एव । अतएव हैमवतीतिशब्दस्य पौराणार्थो न श्रेयानिति सिद्धम् । यक्षशब्दार्थविषये विदेशीयैर्बहु पराक्रान्तं परन्तु यक्षं पूज्यमिति योऽर्थ आचार्यैः प्रदर्शितः स एव वरीयान् "यज देवपूजासंगतिकरणदानेषु" इति पाणिनीयधातुपाठोक्तेः ।

## ५ एतदुपनिषत्स्थोपासनाविचारः ।

यद्ब्रह्मेन्द्रादिभिर्दुर्विज्ञेयं यस्य च ज्ञानेनामृतत्वप्राप्तिस्तज्ज्ञानस्य मन्दबुद्धिभिरधिगमो भवत्वेतदर्थमत्रोपासना । तत्र प्रथमा द्विविधा तत्राद्या प्रदर्श्यते । सा द्विविधा । आधिदैवताध्यात्मभेदेन 'विद्युतो व्यद्युतदा' इति यथा विद्युतो विद्योतनं तद्वद्ब्रह्मोपास्यम् । अयमर्थो यथा विद्युदेकदैव प्रकाशते तद्वदेवैकदैव ज्ञानकाले प्रकाशमानं ब्रह्म तस्य पुनरस्तमयाभावात् । अथवा तेजःशब्दमध्याहृत्य विद्युतस्तेज इव ब्रह्मोपास्यम् । ततः प्रथमाया एव द्वितीयः प्रकारः 'न्यमीमिषदा' इति । यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति । निमिषितवदिव तिरोभूतमित्येवं ब्रह्मोपास्यम् । अथ द्वितीयाध्यात्मरूपिणी । सा द्विविधा । तत्र प्रथमा उपस्मरणसंकल्पादिभिर्मनोलिङ्गैर्ब्रह्मेत्युपास्यमिति । ततो द्वितीया तद्वनं ब्रह्मेत्युपास्यमितिरूपा । अयमर्थः । प्रख्यातं ब्रह्म प्राणिजातस्य संभजनीयमिति गुणेनोपास्यमिति ।

## ६ पदभाष्यवाक्यभाष्ये ।

अत्र केनोपनिषदि शङ्कराचार्यकृतं पदभाष्यं, वाक्यभाष्यं, इति भाष्यद्वयमुपलभ्यते सर्वत्रानन्दाश्रममुद्रणालयादिषु भाष्यद्वयं मुद्र्यतेऽत्रापि पुस्तके तथैव मुद्रितम् । परमत्र विद्वन्मनस्येवं भवति विचारणा । किमेतद्भाष्यद्वयमेकेनैव कृतम् । उभाभ्यां वा कर्तृभ्यामिति । तत्रैककर्तृकत्वेऽर्थैक्यमभिप्रायसाम्यं चापेक्ष्यते । तत्त्वत्र नोपलभ्यते । तद्वैलक्षण्यस्य स्पष्टमुपलभ्यमानत्वात् । तथाहि—

१ पदभाष्ये ' नाहं मन्ये सुवेद २।१० इति मन्त्रेऽहमिति पाठं गृहीत्वा व्याख्यानम् । अत्र यद्युभयोर्भाष्ययोरेक एव कर्ता स्यात्तर्हि मया पदभाष्येऽयं पाठो व्याख्यात इत्याद्युच्येत । तथा तु नोक्तं तेन कर्तृवैलक्षण्यं स्पष्टम् ।

२ पदभाष्ये १।१ मन्त्रे ' प्रेषितं ' इत्यस्यार्थो भिन्नः ।

वाक्यभाष्ये तु तस्यैव प्रेषितमिवेत्यनेन पूर्वविलक्षण उपमार्थः प्रदर्शितः।

३ पदभाष्ये ' श्रोत्रस्य श्रोत्रम् ' १।२ इति मन्त्रे श्रोत्रमित्यादयः प्रथमाः सन्तीति साधितम् ।

वाक्यभाष्ये तु तत्रैव प्रथमाद्वितीयेति विभक्तिद्वयं साधितम् ।

४ १।३ मन्त्रे उभयोर्भाष्ययोरवतरणिकाभेदोऽभिप्रायभेदमूलकः ।

५ १।४ मन्त्रे पदवाक्यभाष्ययोरक्षरार्थसाम्येऽप्यभिप्रायभेदः ।

६ ' यदि मन्यसे ' २।९ इति मन्त्रे पदवाक्यभाष्ययोरवतरणिकाभेदः ।

७ ' प्रतिबोधविदितं ' २।१२ इति मन्त्रे पदवाक्यभाष्ययोः किंचिदभिप्रायभेदः ।

८ ' भूतेषु भूतेषु विचित्य ' २।१३ इति मन्त्रे विचित्येत्यस्य पदवाक्यभाष्ययोर्भिन्नोऽर्थः ।

९ ' प्रथमो विदांचकार ' ४।२७ इति मन्त्रे पदवाक्यभाष्ययोर्वैलक्षण्यम् ।

१० 'तस्यैष आदेशः' ४।२९ इति मन्त्रे पदवाक्यभाष्ययोर्वैलक्षण्यम् ।

११ ' उपनिषदमब्रूम ' ४।३२ इति मन्त्रे पदवाक्यभाष्ययोर्विलक्षणः पन्थाः ।

१२ ४।२७ मन्त्रे पदभाष्य इवशब्दविषय उक्तं वाक्यभाष्ये तु न किमप्युक्तम् ।

१३ उपनिषदमब्रूम ४।३२ इत्यस्यार्थव्याख्याने पदवाक्यभाष्ययोर्विलक्षणः पन्थाः । इत्यादिभिर्निदर्शनैर्नैककर्तृकमिदं भाष्यद्वयम् । ननु कालभेदेनैकेनापि प्रकारान्तरेण ग्रन्थः प्रतिपादयितुं शक्यत इति चेत्सत्यम् । तथा ग्रन्थप्रतिपादनसंभवेऽपि पूर्वं मया पदभाष्ये वाक्यभाष्ये वैवमुक्तं संप्रतीदमुच्यत इति कथनस्यापरिहार्यत्वात् । ततश्चैवं निर्देशाभावादवश्यमेतत्सिध्यति यद्भिन्नावेव निर्मातारौ पदवाक्यभाष्ययोः । एवंच भाष्यद्वयस्य भिन्नकर्तृकत्वसिद्धौ कतरत्पूर्वं पदभाष्यं वाक्यभाष्यं वेति विचारयामः ।

तत्र पदभाष्यं श्रीमद्भगवत्पूज्यपादानामाद्यश्रीशङ्कराचार्याणां कृतिः। वाक्यभाष्यं तु तदनुयायिनां श्रीशङ्कराचार्यपीठमधितिष्ठतां केषांचिदाचार्याणामित्यस्माकं मतिः। तत्र चोपोद्बलकानि तथाहि—

१ पदभाष्यापेक्षया वाक्यभाष्ये श्रुत्यन्तराणां प्रमाणार्थं निर्देशोऽल्पीयान्। इतस्ततः पूर्वपक्षखण्डनेश्वरसिद्ध्यादिः स्वतन्त्रतया लेखो भूयान्। आद्याचार्या उन्मूलमप्रासंगिकमुपनिषद्भाष्ये कदापि न लिखन्ति। उपनिषदां बहूनि वाक्यान्याद्याचार्याणां ग्रन्थे संभवन्ति। तेन वाक्यभाष्यमाद्याचार्येतरकृतम्। तेषां ग्रन्थेऽप्रासंगिकपूर्वपक्षानिर्देशात्।

२ 'प्रतिबोधविदितं' २।१२ मन्त्रे वाक्यभाष्ये प्रतिबोधविदितमित्यस्यार्थत्रितयं कृतं तत्र द्वितीयव्याख्या सद्योमुक्तिं प्रत्याययति। अथवा प्रतिबोधविदितं मतमिति सकृदेवाशेषविपरीतनिरस्तसंस्कारेण स्वप्नप्रतिबोधवद्यद्विदितं तदेव मतं ज्ञातं भवतीति (पृ.२९) सद्योमुक्तिश्च न शास्त्रीया। एतादृशमशास्त्रीयं मतमाद्याचार्याः कदापि न प्रतिपादयिष्यन्ति तेनेदं वाक्यभाष्यमाद्याचार्येतरकृतम्। ननु 'पूर्वं तु यथार्थम्' इति वाक्यभाष्योक्त्यायं पक्षस्तस्यापि न संमतस्तेन नायं दोष इति चेन्न यतोऽशुद्धपक्षप्रदर्शनस्यैव तत्र दोषत्वात्।

३ पदभाष्ये यथाक्रमं शब्दशो विवरणं वाक्यभाष्ये तु सुगमशब्दविशिष्टो मन्त्रो न व्याख्यायते। आद्याचार्याणां सर्वत्र ग्रन्थेषु परिपाटीयं यत्ते यथाक्रमं सर्वाञ्शब्दान्निर्दिशन्ति विशिष्टशब्दान्व्याख्यान्ति च।

४ वाक्यभाष्ये चतुर्थखण्डे षष्ठमन्त्रे सेवन्ते स्मेति स्मपदं निरर्थकं प्रयुक्तम्। एवं निरर्थकशब्दप्रयोग आद्याचार्यग्रन्थे न सङ्घटीति तेनेदं तत्कृतं न संभवति।

एभिर्निदर्शनैर्जानीयुरेव प्रज्ञावन्तो यद्वाक्यभाष्यमाद्याचार्यकृतं नेति। अत्र केचन सांप्रदायिका इत्थं समादधते यद्यथान्यासामुपनिषदां मन्त्रान् विषयवाक्यत्वेन गृहीत्वा तेषां व्याख्यानमाचार्यैर्ब्रह्मसूत्रभाष्ये कृतं तथा केनोपनिषत्स्थमंत्राणां न कृतं तत्रत्यमन्त्राणां विषयवाक्यत्वाभावात्तेन पदभाष्यं कृत्वाप्यपरितुष्यन्तो भगवत्पूज्यपादाः पुनर्वाक्यभाष्यमबीभषन् अतएव 'पदशो व्याख्यायापि न तुतोष भगवान्भाष्यकारः' इत्यानन्दज्ञानोक्तिः संगच्छते। तेन पदवाक्यभाष्यद्वयमाद्याचार्यकृतमेवेति। परं तन्न विचारक्षोदक्षमम्। यतो यथा केनोपनिषत्स्थमन्त्रा न विषयवाक्यत्वेन

ब्रह्मसूत्रे व्याख्यातास्तथेशावास्योपनिषद्गता अपि मन्त्रा विषयवाक्यत्वेन न ब्रह्मसूत्रे व्याख्यातास्तत ईशावास्योपनिषद्यपि भगवत्पूज्यपादैरन्यद्भाष्यं कृतं स्यात्तत्तु नोपलभ्यते तेन पूर्वोक्तं समाधानं स्थवीयः । किंचैतत्समाधानं पूर्वोक्तवैलक्षण्यविवरणं न सहत इत्यन्यदेतत् ।

अन्त उभयोरपि भाष्ययोः " श्रीमत्परमहंसपरिव्राजिकाचार्येत्याद्युक्तिस्तु न निर्णयायाऽलम् । लेखकभ्रमेणापि तथोक्तेः संभवात् । पदभाष्ये १ । २ मन्त्रेऽतिमुच्येत्यादिपदानामथवेत्यनेन प्रदर्शितोऽर्थो वाक्यभाष्येऽङ्गीकृतः साधीयस्त्वात् । तेन वाक्यभाष्यं पदभाष्यादनन्तरकालजम् । पूर्वं दृष्टयोरर्थयोर्मध्ये द्वितीयस्य साधीयसोऽर्थस्य ग्रहणात् । नच पदभाष्य एव वाक्यभाष्यमंगीकृतमिति कुतो नोच्यत इति वाच्यम् । साधीयसोऽर्थस्य दर्शने न केनाप्यसाधीयानर्थो गृह्यत इति लोकसिद्धत्वात् । एवमेव लौकिकी परिपाटी वाक्यभाष्यकृद्भिरादृता तेन पदभाष्यदृष्टार्थद्वये द्वितीय एव स्वीकृतः । यदि पदभाष्यमनन्तरस्थं स्यात्तर्हि पूर्वोऽसाधीयानर्थस्तेन नैव प्रदर्श्येत । पूर्वोर्थोऽसाधीयानिति पक्षान्तरप्रदर्शनप्रयोजकारुच्या, अथवेत्यनेन बोध्यते पदभाष्यकृतापि । पूर्वोक्तार्थस्यासाधीयस्त्वमध्याहारस्वीकारात् । द्वितीयेऽर्थेऽध्याहारस्य प्रसंगो नास्तीति तस्य साधीयस्त्वम् । एतत्स्पष्टीकरणार्थं पदवाक्यभाष्यगतपङ्क्तयः प्रदर्श्यन्ते तथाहि—पदभाष्यम्-अतिमुच्य ' श्रोत्राद्यात्मभावं परित्यज्य ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीरा धीमन्तः । नहि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम् । प्रेत्य व्यावृत्यास्माल्लोकात्पुत्रमित्रकलत्रबन्धुषु ममाहंभावसंव्यवहारलक्षणात्त्यक्तसर्वैषणा भूत्वेत्यर्थः । अमृता अमरणधर्माणो भवन्ति । अथवातिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्यास्माच्छरीरात्प्रेत्य मृत्वेत्यर्थः । अत्र प्रथमार्थे ' श्रोत्राद्यात्मभावं ' इत्यध्याहारः कर्तव्यो भवति । वाक्यभाष्ये—' अतिमुच्यानवबोधनिमित्ताध्यारोपिताद्बुद्ध्यादिलक्षणात्संसारान्मोक्षणं कृत्वा धीरा धीमन्तः प्रेत्यास्माल्लोकाच्छरीरात्प्रेत्य वियुज्यान्यस्मिन्नप्रतिसंधीयमाने निर्निमित्तत्वादमृता भवन्ति ' ॥ ननु द्वितीयार्थेऽपि—अनवबोधनिमित्तेत्यादिवाक्यभाष्यस्थपदानामध्याहारः कर्तव्यो भवतीति न वक्तव्यं तस्याक्षेपेणैव लभ्यमानत्वात् । शरीराद्यात्मभावमिति पदस्य तु नाक्षेपेण लाभः । अतः पदभाष्यं पूर्वं वाक्यभाष्यं तु पश्चात्तनम् ।

अयं वाक्यभाष्यकृत् शंकरानन्दात्प्राक्तनः । शंकरानन्दो विद्यारण्यगुरुस्तेन

शङ्करानन्दस्य कालस्त्रयोदशशतकं भवितुमर्हति । ततः प्राक्तनो वाक्यभाष्य-कृदाचार्य इत्येव निर्णेतुं शक्यम् । आनन्दज्ञानस्तु शंकरानन्दादर्वाक्तनः । तेनैतरेयोपनिषद्भाष्यव्याख्यायां विद्यारण्यकृतैतरेयोपनिषद्दीपिकास्थस्य वचसो निर्देशात् । आनन्दज्ञान आद्यशंकराचार्यशिष्यस्तत्समकालीनश्चेति केषांचिद्भ्रान्तिः । यतो गुरुत्वेन ब्रह्मसूत्रभाष्यटीकायां तेन शुद्धानन्दस्य निर्देशः कृतः । तथाहि समाप्तिश्लोके——शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृत प्रौढगाढोक्तिरूढानन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम् । इति । ततश्चैवं सिद्धम् । अन्येन शाङ्करपीठाधिष्ठितेनैकं भाष्यं केनोपनिषदि व्याख्यातं तस्य वाक्यभाष्यमिति संज्ञा कृता स्यात्परं कालवशादज्ञात्वा तत्कर्तारं भाष्याध्यायिभिरस्य वाक्यसंज्ञां दृष्ट्वा पूर्वभाष्यस्य पदभाष्यमिति संज्ञा कृता भवेत्। स चायं पदवाक्यभाष्यभेदः शङ्करानन्दात्प्राक्तनः 'व्याकरिष्ये पदाध्वना' इति तत्कृतदीपिकाक्तेः । आनन्दज्ञानेन ततोऽर्वाक्तनेन भाष्यद्वये व्याख्याकरणं सुसंगतमेव । अपरितुष्यन्नित्याद्यानन्दज्ञानोक्तिरपि तन्मत्यनुसारं न विरुध्यते । अत्र पदवाक्यभाष्यकर्तृविषये विदेशीयैस्तूष्णींभाव एवांगीक्रियते तेन तद्विचारः कर्तुं न शक्यते । योऽयं मयानुमानप्रमाणमादृत्यैतावता ग्रन्थेन विचारः कृतः स धाष्टर्यकोट्यन्तर्गतः स्यादिति संभावये तथापि विचारशीलानामत्र विषये प्रवृत्त्यै सोऽलं भवत्विति मनीषयानुष्ठितत्वात्क्षमामर्हति विदुषाम् ।

## ७ शाङ्करमतम् ( अद्वैतमतम् )

अस्मिन्मते ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या । जगदादि सर्वं शुक्तौ रजतमिव भासते । ब्रह्म निर्गुणमतएव शब्दैरप्रतिपाद्यम् । अतएव वाङ्मनसयोरगोचरमिति श्रुतौ कथ्यते । सर्वज्ञत्वादयोऽपि ब्रह्मगुणा औपाधिकाः । जीवो ब्रह्मरूपोऽप्यज्ञानाद्भिन्न इव भाति । मनोबुद्ध्याद्युपाधिभिः सर्वोऽपि जनोऽहमिति प्रत्येति । अतएव सुषुप्तौ मनोबुद्ध्यादिलयेनाहमाकारप्रतीत्यभावः । एवं मोक्षावस्थायामप्युपाधिलयादहमाकारप्रतीत्यभावः । एवं चाहमिति प्रतीतिरौपाधिकी । अयं प्रातीतिको जीव एक एव नतु नाना । अन्तःकरणभेदात्सुखदुःखानुभवभेदः । चैतन्यं सर्वव्यापकं स एवात्मेत्यभिधीयते । अयमात्मेश्वरजीवसाक्षीति भेदेन त्रिविधः । सर्वजगन्मूलकारणमज्ञानं तस्मिंश्चैतन्यान्तर्गते सति स आत्मेश्वर इत्यभिधीयते । स एवेश्वरस्सत्त्वरजस्तमोभिर्विष्णुब्रह्मशङ्करेति संज्ञा लभते । आत्मा ज्ञानस्वरूपो नतु ज्ञातृस्व-

रूपस्तस्य ज्ञातृत्वमहंकाराद्युपाधिभिः प्रपञ्चस्यापि ज्ञेयत्वमज्ञानादेव । त्रिविधं सत्यत्वं प्रातिभासिकं, व्यावहारिकं पारमार्थिकं च तत्र प्रातिभासिकस्य शुक्तिरजतादेर्व्यावहारिकसत्यरजतेन बाधः । व्यावहारिकसत्यत्वं घटपटादीनां तच्च पारमार्थिकसत्येन ब्रह्मदर्शनेन बाध्यते ब्रह्मणस्तु कस्यामप्यवस्थायां न बाधः । अत एव तत्परमार्थसत् । घटपटादीनां व्यवहारदशायां सत्यत्वं वस्तुतस्तु ते मिथ्याभूताः । स्वाप्निकपदार्थवत् । यथा स्वप्नगताः पदार्था जाग्रद्दशायां न सन्त्यतो मिथ्या तथा पारमार्थिकदशायामभावादेते व्यवहारदशायां विद्यमाना अपि घटादयो मिथ्या । पारमार्थिकात्मज्ञानेन तद्बाधात् । कासुचिच्छ्रुतिषु सृष्टिराकाशादिक्रमेण कासुचिच्छ्रुतिषु तेज आदिक्रमेण कुत्रचित्सर्वं ब्रह्मैव नान्यदित्युक्तम् । सर्वासां श्रुतीनामबाधितप्रामाण्यात्तत्समन्वयोऽवश्यं कर्तव्यस्तथा चेदमेव सिध्यति यद्ब्रह्मैव सत्यमिति पारमार्थिकदृष्ट्योक्तम् । आकाशादिक्रमसृष्टिस्तु व्यावहारिकी । अनेनापि प्रमाणेन जगतो व्यावहारिकसत्यत्वम् । नतु परमार्थसत्यत्वम् । यदि जगत्परमार्थसत्स्यात्तर्ह्यन्यत्किमपि नास्तीतिप्रतिपादिनी श्रुतिरनर्थिका स्यात् । एवं च सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहार इति मन्तव्यमत एवाज्ञानिदृष्ट्या तत्सत्यत्वं भासते । ज्ञानिदृष्ट्या च ' तस्य पिता अपिता भवति ' इत्युक्तरीत्या तस्य मिथ्यात्वम् । न केवलं सर्वस्य जगतो मिथ्यात्वं श्रुत्या बोध्यतेऽपि तु स्वस्यापि मिथ्यात्वं श्रुतिर्निरभिमानितया ब्रूते । ननु मिथ्याभूतश्रुतेः सत्यज्ञानं कथमिति नच वाच्यम् । " यथा कर्मसु काम्येषु स्त्रियं स्वप्नेऽनुपश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने " इत्युपनिषदुक्तरीत्या मिथ्याभूतात्स्वप्नस्थस्त्रीदर्शनात्सत्यसमृद्धिप्राप्तिरिवासत्याया अपि श्रुतेः सत्यभूतात्मदर्शनस्य संभवात् । यथा वा स्वाप्निकपदार्थानामसत्यत्वेऽपि तज्ज्ञानस्य सत्यत्वं तथा मिथ्याभूताया अपि श्रुतेः सत्यात्मज्ञानम् । एतस्य सर्वजगतो मूलस्वरूपमनाद्यविद्या सा च त्रिगुणात्मिका प्रलयकालसमाप्तिवेलायामविद्यया जीवकृतकर्मभिश्च " तदैक्षत बहु स्यां प्रजायेय " इति रीत्या परमात्मा संकल्पयति तत आकाशादिक्रमेण सृष्ट्युद्गमः । ततश्च पंचीकृतपंचमहाभूतेभ्यः शरीरादीनि प्रादुर्भवन्ति । एवमुत्पन्नशरीरे प्रविष्टं चैतन्यं जीव इत्यभिधीयते स नाणुः किन्तु व्यापकः सर्वस्मिञ्शरीरे सुखदुःखानुभवात् । स च जीवो मुक्तिपर्यन्तं स्थायी जन्मान्तरीयकर्मजसुखदुःखसम्बन्धात् । ननु

जन्मान्तरं नाङ्गीक्रियत इति चेज्जन्मसमकाले जायमानसुखदुःखानुभवस्यानुपपत्तिः। मातृस्तनपानादावप्रवृत्त्यापत्तिश्च। तदानीं कस्यापि कर्मणोऽसंभवात्। जीवो विस्मृतकण्ठस्थच मीकरपुरुष इवात्मविस्मृतेरज्ञानात्सुखदुःखानुभवभाक्। अज्ञानं लिङ्गशरीरं स्थूलशरीरं चेत्युपाधिस्तस्य सदा प्रत्यासन्नः। अयमुपाधिर्दशमस्त्वमसीति ज्ञानेन विस्मृतात्मस्वरूपस्याज्ञानमिवात्मज्ञानेन जीवात्मपरमात्मैक्यज्ञानापरपर्यायेण नश्यति सत्यज्ञानेन विना मिथ्याभूतदर्शनस्यानिवृत्तेः। एवमविद्यानाशे जीवो मुक्तो भवति। तस्य ज्ञानाग्निः प्रारब्धेतराणि संचितक्रियमाणानि कर्माणि नाशयति। अस्यां दशायां प्रारब्धकर्माणि भुञ्जानः स विगतशरीराद्यभिमानो जीवन्मुक्त इत्यभिधीयते प्रारब्धकर्मावसाने देहपाते स विदेहमुक्तो भवति। इयमेव परमा मुक्तिः। अस्यां जीवः परमात्मसायुज्यं नाम स्वरूपमधिगच्छति। नच मतान्तरवदल्पेनापि सेवकादिरूपेण भिन्नस्तिष्ठति। यद्यपि जीवः सदैवात्मस्वरूपस्तथापि भावरूपेणाज्ञानेनात्मानं सुखदुःखभाजं मनुते तदैव बद्ध इत्यभिधीयते तादृशाज्ञानस्य निवृत्तौ स एव मुक्त उच्यते। **साधनक्रमः**। वेदविहितवर्णाश्रमकर्मणा चित्तशुद्धिस्ततो ब्रह्मनिष्ठगुरुं प्रति शरणगमनं तेन तत्त्वमसीति ज्ञानोपदेशस्तच्छ्रवणमनननिदिध्यासनैः संन्यासाश्रममधिवसन्कर्माणि परित्यजंश्च स सुस्थिरज्ञानो मोक्षं लभते। कदाचिद्वामदेवादिवत्पूर्वजन्मकृतकर्मभिः शुद्धचित्तोऽत्र जन्मनि ज्ञानेन मुक्तो भवति। मोक्षाप्तौ ज्ञानमेव साक्षात् साधनम्। कर्मोपासने तु चित्तशुद्धिचित्तैकाग्र्यप्रापकत्वात्परंपरितसाधने। ज्ञानकर्मसमुच्चयस्तु नेष्टः। नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं चेति साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मजिज्ञासा। अस्मिन्मतेऽनिर्वचनीयख्यातिः। प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यनुलब्ध्याख्यानि षट् प्रमाणानि। तत्रालौकिकार्थ आत्मनि शाब्दमेव मुख्यं प्रमाणम्। अन्यदनुमानादि तदवष्टम्भेन प्रमाणं भवति। अत्र मते विवर्तवादः। तत्स्वरूपं स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पते। यथा शुक्तौ रजतं रज्जौ भुजङ्गमश्च। ननु शुक्तिरजतादौ सारूप्यं विवर्तत्वे कारणं जीवजडयोः सारूप्याभावेन चिद्विवर्तत्वं प्रपंचस्य कथमिति चेन्नैतत्साधु। नहि सारूप्यनिबन्धनाः सर्वे विभ्रमा इति व्याप्तिरस्ति। असद्रूपादपि कामादेः कान्तालिङ्गनादिष्विव स्वप्नविभ्र-

मस्योपलम्भात् । किंच कदाचित्के विभ्रमे सारूप्यापेक्षा नानाद्यविद्यानिबन्धने प्रपंचे तदुक्तमाचार्यवाचस्पतिना—विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥" इति । अस्य मतस्य सङ्ग्राहकः श्लोकः ॥ " ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः " इति ॥

## ८ रामानुजमतम् ( विशिष्टाद्वैतमतम् )

विशिष्टाद्वैतशब्दार्थः—चिदचिद्विशिष्टस्य परमात्मनोऽद्वैतमथवा सूक्ष्मशरीरविशिष्टस्य कारणरूपस्य परमात्मनस्तथा स्थूलशरीरविशिष्टस्य कार्यरूपस्य परमात्मनश्चेत्युभयोरद्वैतम् । पदार्थास्त्रिविधा अचिच्चिदीश्वरभेदेन । तत्र प्रकृतिकालशुद्धसत्त्वभेदेनाचित्पदार्थस्त्रिविधः । तत्रापि प्रकृतिस्त्रिधा सूक्ष्मसूक्ष्मतरसूक्ष्मतमेतिभेदेन । साच क्रमेणाव्यक्ताक्षरतम इति संज्ञिका । ईश्वरः परमात्मा स एव ब्रह्मेत्यभिधीयते । चिदचित् ( जीवजड ) पदार्थात्मकमीश्वरस्य शरीरं तच्छरीरमपि स्थूलसूक्ष्मभेदेन द्विविधं सूक्ष्मशरीरयुतः परमात्मा स्थूलस्य जगत उपादानकारणम् । परमात्मन्यप्राकृताः शब्दस्पर्शरूपरसगन्धाः शक्तिज्ञानानन्दादयश्च गुणाः सन्ति । सच सर्वाश्रयो व्यापकश्च तज्ज्ञानं शरीरमपि व्यापकम् । सच पंचविधः परव्यूहविभवान्तर्याम्यर्चावतारभेदेन । स एव सूक्ष्मचिदचित्पदार्थयुक्तो जगत उपादानं विशेषसंकल्पयुक्तश्च निमित्तकारणं भवति । तथा कालाद्यन्तर्यामितया सहकारिकारणं च भवति । अयं परमात्मा सर्वेषां चेतनाचेतनवस्तूनां प्रेरकः कर्मानुकूलफलप्रदोऽप्युदासीनः सर्वजीवानां जडानां च नियन्ता कल्याणगुणपूर्णो हेयगुणप्रत्यनीकः सर्वान्तर्याम्यचिन्त्यशक्तिबलैश्वर्यवीर्यतेजःसंपन्नो भक्तिलभ्यश्चास्ति । जीवजडौ परमात्मनः शरीरभूते । एतद्विशिष्टपरमात्मातिरिक्तं जगति किंचिन्नास्ति । यद्यपि जीवजडौ विशिष्टपरमात्मनोऽनतिरिक्तौ तथापि केवलपरमात्मनस्तौ भिन्नौ नित्यौ च चिदपरपर्यायो जीवः स चाणुर्नतु व्यापकः । सच चेतन ईश्वराधीनकर्तृत्वगुणः स्वप्रकाशः सुखी नित्यः प्रतिशरीरं भिन्नश्च । सच बद्धमुक्तनित्यभेदेन त्रिविधः । ब्रह्मादिकीटान्ताः सर्वे संसारिजीवा बद्धाः । विमुक्तसंसाराः प्राकृतसूक्ष्मशरीररहिता वैकुण्ठे भगवत्संनिधिनिवासिन आविर्भूताष्टगुणा ये ते मुक्तजीवाः । मूलत एव संसारसंबन्धरहिताः परमात्मेच्छानुवर्तिनोऽसंकुचितज्ञाना येऽनन्तगरुडादयस्ते सर्वे नित्यजीवाः । जीवात्मानोऽनन्ताः । जगत्प्रवाहश्चानादिः । नित्यजीवाः स्वे-

च्छया लीलाविभूतिष्ववतारं धारयन्ति । एतेषु नित्यजीवेषु यथाधिकारं तारतम्यं वर्तते । मुक्तजीवेषु तारतम्यं नास्ति । तेषां न कोऽप्यधिकारो नवा तेषामवतारधारणम् । मुक्तौ जीवैः परमात्मसादृश्यं लभ्यते न त्वैक्यम् । जीवो ज्ञातृस्वरूप आनन्दस्वरूपश्च तथा कर्ता भोक्ता । तस्य शरीरं प्रकृतिजन्यं पांचभौतिकं सच स्वयं परमात्मनः शरीरभूतः । जीवात्मा लिङ्गदेहोपाधिना संसरति । सच लिङ्गदेहः प्राकृतोऽनादिश्च । उपाधिभूतलिङ्गदेहत्यागेन जीवेन मोक्षो लभ्यते । मोक्षावस्थायामपि जीवस्य ज्ञातृत्वं न हीयते । मोक्षार्थं जीवस्य ब्रह्मविचारो विधीयते । तत्र पूर्ववृत्तं कर्म ब्रह्मज्ञानेऽङ्गभूतम् । न साधनचतुष्टयसंपत्त्यानन्तर्यं तत्रापेक्ष्यते । यत्रेश्वरनित्यजीवमुक्तजीवाश्च विविधभोगानुपभुञ्जते । यत्रच कर्मरूपाविद्या न संभवत्यसौ देशः शुद्धसत्त्वमित्यभिधीयते । एतत्सत्त्वं प्राकृतसत्त्वगुणतो विलक्षणम् । ज्ञानं स्वप्रकाशं चेतनं व्यापकं बुद्ध्यपरपर्यायं चास्ति । जीवेश्वरौ तदाधारभूतौ तयोर्धर्मो ज्ञानं तच्च स्वतः प्रमाणं बद्धदशायां तत्कर्माच्छन्नं संकुचितं भवति मोक्षे तु तद्विकसितं भवति । प्रकृतिपदार्थो जडो नित्यश्च । तया परमात्मस्वरूपमाच्छादितं भवतीति कर्मवश्या बद्धजीवा मन्यन्ते । इयं प्रकृतिः सत्त्वरजस्तम इति गुणत्रयात्मिका चतुर्विंशतितत्त्वात्मिका च । तानि तत्त्वानि प्रकृतिर्महत्तत्त्वमहंकारो मनः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तन्मात्राणि पञ्च महाभूतानि चेति । एतेषु प्रथमतत्त्वं प्रकृत्याख्यं सर्वेषां जडानां मूलकारणम् । एतदतिसूक्ष्मं सृष्ट्यादौ परमात्मन इच्छया प्रकृतौ परिणम्यमानायां यथा यथा सूक्ष्मता हीयते तथा तथावस्थान्तरं भवति । तत्र प्रथमावस्था तम इत्यभिधीयते । द्वितीयावस्थाक्षरं, तृतीयावस्थाव्यक्तं च । इदं तृतीयमव्यक्तं नाम कार्योन्मुख्यव्यवस्था, अव्यक्तानन्तरं जायमानाः सर्वे परिणामा व्यक्ताः । तत्र प्रथमपरिणामो महत्तत्वम् । अत्र गुणत्रयसाम्यं नास्ति । त्रिष्वन्यतमो गुणः प्रबलो भवति । महत्तत्वं ब्रह्मणः शरीरम् । अस्माज्जायतेऽन्तःकरणवृत्तिर्बुद्धिनाम्नी निश्चयाख्या । महत्तत्त्वात्सत्त्वगुणप्राबल्येन जायमानः सात्त्विकोऽहंकारो वैकारिक इति कथ्यते । अस्मात्सात्त्विकाहंकारात्पंच ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चोत्पद्यते । एतदेव मनः स्मृत्यादीनां साधनं सर्वेन्द्रियाणां प्रेरकं संसारबन्धकारणीभूतं च । अचिद्वस्तूनां यथा महत्तत्त्वादिरूपेण परिणामा भवन्त्येवं जीवात्मनो ज्ञानधर्मसंकोचविकासादयोऽवस्था भवन्ति । तथात्मनोऽपि सृष्ट्यादिसंकल्पाद-

योऽवस्था भवन्ति । जडव्यापाराः सदा परबुध्द्यवलम्बनेन संभवन्ति । परमात्मनः सर्वे व्यापाराः स्वबुद्ध्यवलम्बनेन संभवन्ति । जीवस्य तु केचिदेव व्यवहारा ईश्वरबुद्ध्यवलम्बनेन केचित्स्वस्य परमेश्वरस्य चेत्युभयोर्बुद्धिमवलम्ब्य प्रवर्तन्ते । केवलमेव स्वबुद्धिमवलम्ब्य जीवेन व्यवहारः कर्तुं न शक्यते। जडपदार्थाः सदान्यस्य शरीरं भवन्ति । आत्मत्वं तु तेषां नास्ति। तथेश्वरः सदात्मैव शरीरत्वं तस्यन ास्ति । जीवस्तु स्थूलदेहस्यात्मा । ईश्वरस्य शरीरमित्युभयं भवति । अन्तर्नियामकत्वं चात्मशब्दप्रवृत्तिनिमित्तं तेन जीवः परमात्मेति द्वयमप्यात्मशब्देन व्यवह्रियते । अन्तर्यामित्वस्य परा काष्ठा परमात्मेति । ज्ञानं द्विविधं स्वरूपभूतं धर्मभूतं च । तत्र स्वरूपभूतज्ञानं जीवाभिन्नं धर्मभूतज्ञानं तु ततः पृथक् । एवंच्च स्वरूपभूतज्ञानदृष्ट्या ज्ञानस्वरूपो जीवः । स एवाहमिति प्रतीत्या भासमानत्वाज्ज्ञेयोऽपि । तथा तादृशज्ञानवत्वात् स एव ज्ञातृस्वरूपोऽपि । पञ्चीकृतपञ्चमहाभूतानि महत्तत्त्वमहंकारश्चेति सप्त तत्त्वानि प्रकृतिश्चेत्यष्टभ्यः शरीरोत्पत्तिः । ततस्तच्छरीरं पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्च भूषयति । भक्तिः प्रपत्तिश्चेति मोक्षसाधने । भक्तिर्भजनम् । अनन्यभावेन परमेश्वरः शरणीकरणीय इति प्रपत्तिः । साधनक्रमश्चेत्थम्—कर्मज्ञानयोगौ भक्तिकारणम् । साधनभक्तिः प्रपत्त्यङ्गम् । साच प्रपत्तिर्यत्र देहे तद्देहपात एव मोक्षः । अत्र मते प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम् । अन्यप्रमाणानामत्रैवान्तर्भावः । अत्र मते सत्ख्यातिः । जीवन्मुक्तिर्नास्ति । अत्र मतेऽद्वैतवाद्यादृतो विवर्तवादः खण्ड्यते परिणामवादश्च स्वीक्रियते । तत्तात्पर्यमित्थम्—जगति विद्यमानानि सर्ववस्तूनि सत्यानि तानि मूलप्रकृतिपरिणामभूतानि च । श्रुतिगतानि ‘ असत्यं ’ ‘ नास्ति ’ इति पदानि न मिथ्यार्थबोधकानि किन्तु विनाशित्वबोधकानि । परिणामिपदार्थस्वरूपं तत्तदवस्थासु भिद्यतेऽतस्ते पदार्था असत्या विनाशिन इत्युच्यन्ते नतु मिथ्याभूतत्वं तेषामिति मन्तव्यम् । एवं च जगत्सत्यमिति राद्धान्तः ।

## ९ अद्वैतविशिष्टाद्वैतयोर्वैलक्षण्यस्य स्थलानि ।

| | |
|---|---|
| १ आत्मरूपमेकमेव अन्यन्नास्त्येव । | १ चिदचिद्रूपशरीरविशिष्ट आत्मैक एव । तच्छरीरादन्यत्किंचिन्नास्ति । |
| २ आत्मा निर्विशेषो निर्गुणश्च । | २ आत्मा सर्वज्ञत्वादिविशेषयुक्तः । |

३ आत्मा ज्ञानस्वरूपो न ज्ञानगुणवान् । अतएव तस्य न वस्तुतो ज्ञातृत्वम् ।

४ आत्मा स्वरूपेण कूटस्थनित्यः । तेनैव रूपेणाद्वितीयश्च ।

५ परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं जीवत्वम् । जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वम् ।

६ परमात्मनः सकाशादभिन्नापि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या तदुपहितः परमात्मा जगतो मूलप्रकृतिः ।

७ अस्मिन्मते विवर्तवादः । अज्ञानेन परमात्मन्येवेदं जगद्भासत इत्येवंरूपः । अत्र रज्जुसर्पदृष्टान्तः ।

८ परमात्मविवर्तभूतं प्रातिभासिकमिदं जगन्मिथ्यैव ।

९ अत्र मतेऽनिर्वचनीयख्यातिः । अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इतिरूपा ।

१० शुक्तिरजतस्थले स्वप्नादौ चानिर्वचनीया एवार्था भासन्ते ।

११ तत्त्वमस्यादिशास्त्रमपि जगदन्तर्गतत्वादसत्यमेव । तथापि त-

अनन्तकल्याणगुणाश्रयः । तत्र हेयगुणा न सन्ति ।

३ आत्मा ज्ञानस्वरूपोऽपि ज्ञानगुणाश्रयः । वस्तुत एव तस्य ज्ञातृत्वम् ।

४ परमात्मा स्वरूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः । विशिष्टरूपेणैवाद्वितीयः ।

५ परमात्मैवेश्वरः । तच्छरीरभूतो जीववर्गो जडवर्गश्च । ततो भिन्न एवेति । चिदचिदीश्वररूपं तत्त्वत्रयम् ।

६ परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः ।

७ अस्मिन्मते परिणामवादः प्रधानमेवान्तर्यामीश्वरसान्निध्याज्जगदाकारेण परिणमत इतिरूपः । अत्र पयोदधिदृष्टान्तः ।

८ प्रधानपरिणामभूतं चेदं जगत्सत्यमेव ।

९ अत्र मते सत्ख्यातिः । वस्तुतः सत्यमेव जगत्प्रतीयत इतिरूपा ।

१० शुक्तिरजतस्थले स्वप्नादौ च सत्या एवार्थाः प्रतीयन्ते ।

११ तत्त्वमस्यादिशास्त्रं सत्यमेवात एव तत्त्वज्ञानसाधकम् ।

त्वज्ञानसाधनं भवत्येव । स्वाप्नप दार्थवत् ।

१२ प्रमाणानि षट् । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यानि ।

१३ परमात्मनोऽभिन्ना जीवाः । तेषां परमात्मवदेव ज्ञानस्वरूपत्वं नतु वस्तुतो ज्ञानाश्रयत्वं किन्त्वन्तःकरणोपाधिकं ज्ञातृत्वम् ।

१४ जीवो व्यापकः ।

१५ जीवो ब्रह्मस्वरूपत्वादेक एव । तदनेकत्वं त्वौपाधिकम् ।

१६ साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा ।

१७ तत्त्वमस्यादिमहावाक्यैरात्मसाक्षात्कारेऽविद्यानिवृत्त्या शरीरसत्त्वेऽपि जीवद्दशायां मुक्तिः ।

१८ प्रारब्धकर्मणां भोगेन क्षये शरीरत्यागे स्वस्वरूपेऽवस्थितिरूपा विदेहमुक्तिः ।

१९ मुक्तौ जीवब्रह्मणोर्भेदो नास्ति।

२० मुक्तावस्थायां न लेशतोऽपि दुःखं न सुखं भवति ।

१२ प्रमाणानि त्रीणि । प्रत्यक्षानुमानागमरूपाणि ।

१३ जीवाः परमात्मनः सकाशाद्भिन्नास्तच्छरीरभूता अपि ज्ञानस्वरूपा ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् ।

१४ जीवोऽणुरूपः ।

१५ जीवा वस्तुत एव नानाविधाः। जीवाद्वैतं तु प्रकाराद्वैतम् ।

१६ कर्मस्वरूपज्ञानानन्तरं ब्रह्मजिज्ञासा ।

१७ तत्त्वमस्यादिमहावाक्यजन्योपासनादार्ढ्येन परमात्मा प्रसन्नो भवति। तथापि यावच्छरीरं सुखदुःखानुभवावश्यकत्वान्न जीवद्दशायां मुक्तिः।

१८ प्रारब्धकर्मक्षये लौकिकशरीरत्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवति । इयमेवास्मिन्मते मुक्तिः ।

१९मुक्तावपि जीवब्रह्मणोर्भेदोऽस्ति।

२० मुक्तावस्थायां दुःखलेशेनाभिन्नं सुखाधिक्यमनुभूयते ।

## १० प्रकाशिका.

यथा श्रीमच्छङ्कराचार्यैः प्रस्थानत्रये स्वयं भाष्यं व्यरचि न तथा श्रीरामानुजाचार्यैः । यतस्तेषां भगवद्गीतासु ब्रह्मसूत्रेषु च भाष्यमुपलभ्यते । उपनिषत्सु रङ्गरामानुजाचार्याणां प्रकाशिकाख्या टीकैवोपलभ्यते । एते

रङ्गरामानुजाचार्याः श्रीभाष्यटीकायाः श्रुतप्रकाशिकायाः प्रणेतुः श्रीसुदर्शनाचार्यादर्वाचीनाः। यतस्तैः कठोपनिषत्प्रकाशिकायां श्रुतप्रकाशिकाया बहुशो निर्देशः कृतः। केनोपनिषदि प्रकाशिकायां प्रायो विशेषविवरणं नास्ति। कुत्रचित्स्थलेषु द्वितीयखण्डचतुर्थमन्त्रादिष्वध्याहारपूर्वकं व्याख्यानं कृतम्। तत्र शाङ्करव्याख्यानमेव श्रेयः। अध्याहाराभावात्।

## ११ बालबोधिनी.

केनोपनिषदो व्याख्यात्रये बालबोधिनी नाम वृत्तिर्मया व्यरचि साच यावच्छक्यमन्वर्थनाम्नी यथा स्यात्तथा प्रयतितम्। यद्यपि पदवाक्यभाष्यद्वय आनन्दज्ञानकृता सर्वाङ्गपूर्णा टीकास्ति। तथापि नव्यच्छात्राणां मन्दव्युत्पत्तीनां कृतेऽवश्यमस्या उपयोगो भविष्यतीति संभावये। किंच प्रकाशिका नैतावता कालेन केनापि व्याख्याता सापि व्याख्यातात्र। अत्र च तत्तन्मतानि सुविशदं निरूपितानि। यद्यपि मया बालबोधिन्यां सर्वत्रानन्दज्ञानप्रदर्शितः पन्था आदृतस्तथापि क्वचिद्वैमत्यमप्यस्ति। यथा प्रथमखण्डे प्रथममन्त्रे पदभाष्ये 'इषितमित्यत्रेडागमश्छान्दसः' इत्यत्र। तथा द्वितीयखण्डे चतुर्थमन्त्रे वाक्यभाष्ये। अत्र यद्वैमत्यकारणं तत्तत्रैव बालबोधिन्यां प्रादर्शि। मोहमयीप्रान्तस्थविश्वविद्यालयसमित्या केनकठोपनिषदौ शाङ्करभाष्यरङ्गरामानुजकृतप्रकाशिकासहिते बी. ए. श्रेणीपरीक्षार्थं नियमिते। तयोर्भाष्याणि प्रकाशिका चैतत्कालपर्यन्तं भिन्नपुस्तकयोर्मुद्रितान्यासन्। तेन तत्संजिघृक्षूणां विद्यार्थिनां वैरस्यमुपलभ्य भाष्यप्रकाशिकानां भिन्नमतस्थानां व्याख्यानामेकस्मिन्पुस्तके निवेशेन यथा सुकरतया वैलक्षण्यं ज्ञातुं शक्यते तथा तद्भिन्नपुस्तकस्थाना ज्ञातुं न शक्येतेति निरूप्य चैकत्रैवैता भिन्नमतस्था व्याख्या मुद्रिताः। तासां च बालबोधिनी विषमपदार्थानां बोधिका विशेषतस्तत्तत्सिद्धान्तप्रदर्शिनी चान्ते पत्रसंख्यानिर्देशपूर्वकं प्रतिमन्त्रं न्यवेशि। व्याख्यात्रयानिर्दिष्टवचसां च स्थलानि लब्धालब्धविभागेन प्रदर्शितानि। तदेतत्पुस्तकमुपयुज्य विद्यार्थिनः कृतकार्या भवेयुर्विद्वांसश्च विमर्शशालिनो विमत्सराः कृपयोपलभ्यमानं मानुषशेमुषीसुलभं शास्त्राव्युत्पत्तिजन्यं वा प्रमादं दर्शयेयुस्तेन कृतकृत्यतामानयिष्याम्यात्मानमिति मन्यमानः—

| | |
|---|---|
| पुण्यपत्तने—चैत्रशुक्लप्रातिपत् १८४१ मिते शाके | विद्वद्वशंवदः पाठकोपाह्वत्र्यम्बकतनूजनुः श्रीधरशर्मा। |

श्रीः

# अथ केनोपनिषद्व्याख्यात्रये बालबोधिनी ।

**नत्वा श्रीशंकरं केनभाष्ययोः पदवाक्ययोः ।**
**वृत्तिः प्रकाशिकायां च तन्यते बालबोधिनी ॥ १ ॥**

अथ प्रथमखण्डे प्रथममन्त्रः ॥१॥१॥

[ पदभाष्यम् ] [पृ.१] " चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः" म. भा. १ । १ । १ इति पातञ्जले महाभाष्ये पस्पशान्हिक उक्तत्वात्सहस्रशाखायुतस्य सामवेदस्यान्यतम्यां तलवकारशाखायामुक्ता योपनिषत्तां व्याख्यातुं तस्या व्याख्येयत्वं प्रतिपादयत्याचार्यः **केनेषित मित्यादिना** । पूर्वेषामष्टानामध्यायानामस्य नवमाध्यायस्य च हेतुहेतुमद्भावः संगतिरिति दर्शयितुं पूर्वं वृत्तमनुवदति—**प्रागेतस्मादित्यादिना**। **कर्माङ्गसामविषयाणि चेति** । पञ्चावयवकं सप्तावयवकं च कर्माङ्गसाम । तद्विषयोपासनानि पृथिव्यादिदृष्टचोक्तानि । कर्माङ्गसामविषये पृथिव्यादिदृष्टिः कर्तव्या । कर्माङ्गसाम पृथिव्यादिरूपमस्तीति मन्तव्यमित्यर्थः । तथा गायत्रसामविषये प्राणदृष्टिः कर्तव्येत्यपि कथितम् । **वंशान्तमिति** । गुरुशिष्यपरम्पराया अविच्छेदो वंशः । **कार्यमिति**। अवश्यकर्तव्यं नित्यमिति यावत्। **सत्त्वशुद्ध्यर्थमिति**।सत्त्वशुद्धिश्चित्तशुद्धिस्तद्द्वारा नित्यकर्माणि ज्ञानोपयोगीनि। काम्यकर्माणि न कर्तव्यानीति तत्र दोषं दर्शयति—**सकामस्येति**। श्रौतानि—अग्नित्रयसाध्यानि । स्मार्तानि—गृह्याग्निसाध्यानि । " धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" भ. गी.८।२५ इत्यनेन भगवता दक्षिणमार्गो दर्शितः । पुनरावृत्तिः—पुनर्जन्म । पूर्ववत्प्रतिषिद्धेषु " न कलञ्जं भक्षयेत् " "ब्राह्मणो न हन्तव्यः " इत्यादिषु दोषं दर्शयति—**स्वाभाविक्येति**। प्रतिषिद्धकर्मसु स्वाभाविक्येति प्रवृत्तिर्न तत्र प्रेरकापेक्षेत्यर्थः । **अधोगतिरिति** । पशुप्रभृति वृक्षपाषाणादिपर्यन्तं निकृष्टं जन्मेत्यर्थः । **एतयोः पथोरिति** । एतयोर्ज्ञानकर्मणोरन्यतरेण मार्गेणाप्रवर्तमानाः प्रति-

षिद्धकारिणः पुरुषाः क्षुद्राणि जन्मानि यूकामशकादीनि वारंवारमावर्तमानानि पुनः पुनराप्नुवन्ति । **जायस्व म्रियस्वेति** । " क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः " पा. सू. ३।४।२ इति पाणिनिसूत्रेण लोट् स्वादेशश्च । पुनः पुनर्जायन्ते म्रियन्ते च । असकृज्जननमरणवन्त इत्यर्थः [ **पृ. २** ] **तिस्र इति** । मनुष्यादयो जरायुजाः । पक्ष्यादयोऽण्डजाः । भूमिमुद्भिद्य जायमाना उद्भिज्जा वृक्षादय इति त्रिविधाः प्रजाः । **अत्यायमिति** । आयो गतिः । अतीत्य दक्षिणोत्तरमार्गमुल्लंघ्य या गतिः पश्वादिजन्म तामीयुः प्राप्तवन्त इत्यर्थः । एवं कर्मफलं विचार्य ततो विरक्तस्यात्मज्ञानेऽधिकार इत्याह– **विशुद्धसत्त्वस्येति** । **साध्यसाधनसम्बन्धादिति** । व्यवहितेन विरक्तस्येत्यनेन संबन्धः । साध्यं–स्वर्गादि । साधनं-यज्ञादि । **इहकृतादिति** । एतज्जन्मपूर्वजन्मसाध्यादित्यर्थः । **संस्कारविशेषोद्भवादिति** । ब्रह्मस्मृतिप्रापकः संस्कार एव विशिष्टसंस्कारः । घटपटादिस्मृतिप्रापकास्तु सामान्यसंस्काराः । **जिज्ञासेति** । विचार इत्यर्थः। वस्तु—ब्रह्मरूपम् । **प्रश्नप्रतिवचनलक्षणयेति** । दुर्गमोऽर्थः प्रश्नोत्तराभ्यां ज्ञातुं सुकरो भवतीति श्रुत्या प्रश्नोत्तररूपत्वं स्वीकृतम् । यथा पुरुषसूक्ते "मुखं किमस्यासीत्किं बाहू किमूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः य०मा०सं०३१।१०-११इत्यादौ प्रश्नप्रतिवचने । **पराञ्चीति**। खानि श्रोत्रादीन्द्रियाणि पराग्गमनस्वभावान्येव कृतवान् स्वयंभूः । एतादृशस्वभावकरणमेव तद्धिंसनम् । यतस्तादृशस्वभावादात्मप्राप्तिर्न भवति । तस्मादुपलब्धा परागनात्मभूताञ्शब्दादीनुपलभते नान्तरात्मानम् । एवं स्थितेऽपि कश्चिन्नदीरयप्रतीपगामी पुरुष इव धीरो विवेक्यावृत्तचक्षुरशेषविषयजाताद्व्यावृत्तं चक्षुर्यस्य । चक्षुष उपलक्षणत्वात्सर्वाणीन्द्रियाणि । स चामृतत्वप्राप्तिकामः प्रत्यगात्मानमैक्षत्पश्यतीत्यर्थः । **परीक्षेति** । परीक्ष्य—विचार्य । कर्मचितान्— क्रियासंपादितान्स्वर्गादिलोकान् । अकृतः–मोक्षः । कृतेन--कर्मणा । श्रोत्रियं—शास्त्रसंपन्नम् । ब्रह्मनिष्ठं—आत्मानुभववन्तम् । अत्रेदं ध्येयम् । श्रेष्ठमध्यमकनिष्ठेति भेदेन त्रिविधो गुरुः । तत्र शास्त्राध्ययनसंपन्नो ब्रह्मानुभववांश्च श्रेष्ठः । यतः स शिष्यान् शास्त्रयुक्त्यादि प्रदर्श्यानुभवबलेन ब्रह्मात्मनोरैक्यं बोधयेत् । केवलशास्त्रनिष्ठो मध्यमः । अयं यद्यप्यनुभवविधुरस्तथापि शिष्यगतासंभावनान्यथासंभावनारूपदोषं शास्त्रयुक्तिभिर्निराकुर्यात्तेनाधिकारी शिष्यः स्वयमेव ब्रह्मानुभवमधिगच्छेत् ।

शास्त्रविधुरोऽपि प्रारब्धकर्मपरिपाकवशात्पूर्वजन्मसंस्कारेण च जीवब्रह्मैक्यानुभववांस्ततोऽवरः। यतोऽयं स्वयंमुक्तोऽपि वर्तमानजन्मस्थशास्त्रज्ञानाभावेन शिष्यगतासंभावनाविपरीतभावनादोषनिराकरणेऽसमर्थत्वाच्छिष्योपदेशेऽकिंचित्करः। इति। विरक्तस्य ब्रह्मज्ञानं नान्यस्येत्यन्वयव्यतिरेकाभ्यां दर्शयति। **एवमित्यादिना**। अन्यथा—वैराग्याभावे बहिर्विषयाक्षिप्तचेतस्त्वे च। **भिद्यन्त इति**। हृदयग्रन्थिः—बुद्ध्याश्रयः कामः। कर्माणि—संचितक्रियमाणानि न तु प्रारब्धं तस्य भोगेनैव क्षयात्। परावरे—परं कारणात्मना। अवरं कार्यात्मनेति कार्यकारणरूपे ब्रह्मणि [ पृ. ३ ] ज्ञानकर्मसमुच्चयोऽपि मोक्षसाधक इत्याशङ्क्य खण्डयति—**कर्मसहितादपीत्यादिना**। "स्वाध्यायोऽध्येतव्यः" इति शतपथब्राह्मणोक्तेनैकेनैव विधिना कर्मकाण्डज्ञानकाण्डगतवेदाध्ययने प्रवृत्तिरत उभयकाण्डफलैक्यमावश्यकमिति शङ्काकृदाशयः। केवलमध्ययनविधिपरिग्रहेण फलैक्यं न संभवति यतः श्रुत्या ज्ञानस्य पृथक्फलं स्वयं कण्ठरवेणोक्तमिति प्रतिवक्तुराशयः। यदि कर्मसहितमेव ज्ञानं फलदमिति श्रुतेरभिप्रायोऽभविष्यत्तर्हि तत्र कर्मसंन्यासविधानं नोपापत्स्यदित्याह—**तत्रैवेति**। **किं करिष्याम इति**। तद्विषयकामनाराहित्यान्न प्रजादीनामुपयोग इत्यर्थः। **संन्यास एवेति**। द्विविधः संन्यासः। विविदिषासंन्यासो विद्वत्संन्यासश्च। तत्राद्यो ब्रह्मज्ञानस्यानुभवावसानतासिद्धये परोक्षनिश्चयपूर्वकः स च कर्तव्यकोटिमाटीकते। द्वितीयस्तु सिद्धे ब्रह्मात्मानुभवे संभवति। तेन स्वभावप्राप्तोऽयं नात्र कर्तव्यता। कर्मज्ञानसमुच्चयासंभवे कारणान्तरमाह—**कर्मसहभावित्वविरोधाच्चेति**। पूर्वोक्तसंग्रहवाक्यं विवृणोति—**न ह्युपात्तेत्यादिना**। कर्मणि यज्ञादिकारकाणि स्वर्गादिफलं चैतद्भेदविज्ञानमपेक्ष्यते। ज्ञाने तु साधनसाध्यादिसर्वभेदाभावः। [ पृ. ४ ] ननु कर्मवद्ब्रह्मज्ञानेऽपि यथाविध्यनुष्ठेयत्वमधिकारिविनियोज्यता चास्ति तेन कथं तत्र सर्वभेदप्रत्यस्तमय इत्यत आह—**वस्तुप्राधान्ये सतीति**। अपुरुषतन्त्रत्वात्—अनुष्ठातृपारतन्त्र्याभावात्। विधिजन्यप्रयत्नभाव्यो विधिविषय उच्यते ज्ञानं तु न तथेति ज्ञानविधेरसिद्धिरित्यर्थः। **दृष्टादृष्टेभ्य इति**। ऐहिकपारलौकिकविषयेभ्य इत्यर्थः। **आपनेयेति**। प्रापणीया निराकरणीया वा न भवतीत्यर्थः। **साधिष्ठमिति**। साधुतमं फलमित्यर्थः। [ पृ. ९ ] शरणं संसाररक्षकम्। इष गतौ दिवादिः। इष आभीक्ष्ण्ये क्र्यादिः। इष इच्छायां तुदादिः। इति धातुत्रयं तत्राद्ययोरर्थस्यासंभवा-

दन्त्राग्रहणमित्याह—**इषेरिति**। मनसः पौनःपुन्यस्य गतेश्चात्रानभिप्रेतत्वा-न्मनमः प्रेरकविशेषस्य बोद्धुमिष्टत्वाद्धत्याभीक्ष्ण्यार्थकेषधातोरसंभव इत्यर्थः। **छान्दस इति** "तीषसहलुभरुषरिषः" पा. सू. ७।२।४८ इति सूत्रेण तकाराद्यार्धधातुकस्य विकल्पेनेड्विधानात् "यस्य विभाषा" पा. सू. ७।२।१५ इति सूत्रेण यस्य क्वचिद्विभाषयेड् विहितस्ततो निष्ठाया इण्न स्यादित्यर्थकेनेषितमित्यत्र क्तप्रत्ययस्येडागमेन न भवितव्यमत्र तु दृश्यत इडागमस्तस्य गतिरियं छान्दस इति। "व्यत्ययो बहुलम्" पा. सू. ३।१।८५ इति सूत्रेण बाहुलकात्कथमप्यत्रेडित्यर्थः। अत्रेट्-प्रयोगे सति गुणेन भवितव्यमित्याद्यानन्दज्ञानकृतटीकायामुक्तं तन्न रुचिरम्। यत इडागमे सत्यपि क्तस्य कित्वात् "क्ङिति च" पा. सू. १।१।५ इति सूत्रेण गुणनिषेधस्य दुर्वारत्वात्। इषितं प्रेषितमिति पदद्वयस्य कृत्य-माह—**तत्रेति**। **प्रेषयितृप्रेषणविशेषविषयेति**। "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते" इति न्यायेन विशेषशब्दस्य प्रेषयितरि प्रेषणे च संबन्धस्तदाह—**केनेत्यादिना**। **इच्छामात्रेणेति**। प्रयत्नं विना केवलं संनि-धिमात्रेणेत्यर्थः। तदपि न संगच्छत इत्याह—**अपि चेति**। **अर्थाधि-क्यमिति**। यावदर्थं शब्दप्रयोग इत्यभियुक्तोक्तेः। **प्रश्नसामर्थ्यादिति**। अन्यथा प्रश्न एव व्यर्थः स्यादित्यर्थः। तदेव प्रश्नसामर्थ्यादिति संग्रहवाक्यं विवृणोति—**देहादित्यादिना** [पृ. ६] **संकल्पयतीति**। स्वशिरश्छेदमपि कर्तुं वाञ्छतीत्यर्थः। कार्ये—द्यूतादौ॥ १॥

[वाक्यभाष्यम्] **विकल्पसमुच्चयानुष्ठानादिति**। उपासनेन विना केवलकर्मा-नुष्ठानं विकल्पः। उपासनसहितकर्मानुष्ठानं समुच्चयः। तत्सामर्थ्या-द्दक्षिणोत्तराभ्यां मार्गाभ्यां पुनर्जन्मापुनर्जन्म वा भवति दक्षिणमार्गवदुत्तर-मार्गोऽपि भगवद्गीतासु "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्" भ. गी. ८।२४ इत्यादिनोक्तः। इदमत्र ध्येयम्। दक्षिणमार्गगामिनः स्वर्गादिलोके पुण्यफलमुपभुज्य "क्षीणे पुण्ये मृत्युलोकं विशंति" भ. गी. ९।२१ इति भगवदुक्त्यनुसारं पुनर्मानुषलोके जन्म लभन्ते। उत्तरमार्गगा-स्तु तत्तल्लोकानातिवाहिकपुरुषेण सह गत्वा प्रलयसमये "परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" इत्युक्त्या हिरण्यगर्भेण साकं परं पदं प्रविशन्ति पुनर्जन्म न लभन्ते। इयमेव क्रममुक्तिः। **फलनिरपेक्षेत्यादि**। सकामतयानुष्ठितं कर्म संसारप्रापकं निष्काममाचरितं तु तच्चित्तशुद्धिसंपा-

दकम् । ततश्चित्तशुद्ध्यनन्तरमात्मज्ञानप्रतिबन्धिका या संसारासक्तिः सापि तस्याधिकारिणो न भवति । द्वैतस्वरूपसंसारदोषदर्शनात् । ततश्च दोष-दर्शनात्सोऽखिलान्बाह्यान् घटपटादिविषयान्यथाभूतान्न पश्यति किन्त्व-सत्यानवधारयति । ततश्चेदृशपदार्थभासकं संसारबीजभूतमनादि भावरूप-मज्ञानमुच्छेत्तुमिच्छति प्रत्यगात्मविषयजिज्ञासुश्च भवति तादृशाधिकारिणः कृतेऽयमध्यायः । **मृत्युपदमिति** । मृत्योः स्थानभूतं पुनःपुनर्मृत्युसाधकम् । अथवा मृत्युरिति पदं पर्यायशब्दो यस्येत्यर्थः । " प्रमादं वै मृत्युमहं ब्रवीमि " म. भा. स. सु. इति सनत्सुजातोक्तेः । **अनधिगतत्वादिति** । अहं मनुष्योऽहं स्थूल इत्याद्यनुभवे सार्वत्रिके मनुष्यत्वदेहत्वाद्यतिरिक्ता-त्मनोऽज्ञातत्वादित्यर्थः । यद्यपि " स्वर्गकामोऽग्निष्टोमेन यजेत " इत्यादि-श्रुतिप्रामाण्यान्मनुष्यत्वदेहत्वाद्यतिरिक्त आत्मा स्वर्गफलभुगङ्गीक्रियते कर्माणि तथापि न ब्रह्मात्मतत्त्वं तत्रादर्तुं शक्यते साधनसाध्यादिविरोधा-दित्याह संग्रहवाक्येन—**कर्मविषये चेत्यादिना** । अनुक्तिरात्मनोऽकथन-मित्यर्थः । एतदेव संग्रहवाक्यं विवृणोति—अस्येति । [ पृ. २ ] **कर्मणा विरुध्यत इति** । कर्मज्ञानविरोधविषय आचार्येण बहुषु स्थलेषु बहुशः प्रतिपादितम् । तथाहि तैत्तिरीयोपनिषद्भाष्ये " विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः । प्रविलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते । न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेषवत्तच्छून्यं चेत्युभयथा द्रष्टुं शक्यते । अवश्यं ह्यन्यतरन्मिथ्या स्यादन्यतरस्य च मिथ्यात्वप्रसंगे युक्तं यत्स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम् । "यत्र हि द्वैतमिव भवति" "मृत्योः स मृत्युमाप्नोति" "अथ यत्रान्यत्पश्यति तदल्पम् " अन्योऽसावन्योऽहमस्मि " उदरमन्तरं कुरुते" "अथ तस्य भयं भवति " इत्यादिश्रुतिशतेभ्यः। सत्यत्वं चैकत्वस्य "एक-धैवानुद्रष्टव्यम्" "एकमेवाद्वितीयम् " "ब्रह्मैवेदं सर्वम् " "आत्मैवेदं सर्वम्" इत्यादिश्रुतिभ्यः । न च संप्रदानादिकारकभेदादर्शने कर्मोपपद्यते। अन्यत्व-दर्शनापवादश्च विद्याविषये सहस्रशः श्रूयते। अतो विरोधो विद्याकर्मणोः । अतः समुच्चयानुपपत्तिः ॥ " तथा तत्रैवाग्रेऽपि । " अपि चानात्मद-र्शनेऽनात्मविषयः कामः । कामयमानश्च करोति कर्माणि । ततस्तत्फलोप-भोगाय शरीराद्युपादानलक्षणः संसारः । तद्व्यतिरेकेणात्मैकत्वदर्शिनो विष-याभावात्कामानुत्पत्तिरात्मनि चानन्यत्वात्कामानुत्पत्तौ स्वात्मन्यवस्थानं

मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोधः ॥ " इति । **कर्मविषयेऽनुक्तिरिति।** यतः कर्म ज्ञानेन विरुध्यतेऽतो ज्ञानप्रतिपादकोपनिषद्भागे कर्मविषयिण्यनुक्तिः कर्म नोक्तं किन्तु विज्ञानविषयको विचारः प्रचलित इत्यर्थः । कर्मानारम्भ इतीत्यादि प्रश्नप्रतिवचनात्मकसंग्रहवाक्यं विवृणोति—**यदीत्यादिना । परिरितित्याजायिषितमिति** । पूर्वं कर्म कृत्वा ततस्त्यक्तुमिष्टमित्यर्थः । [ पृ. ३ ] **तन्निर्वर्तकाश्रयेत्यादि** । तन्निर्वर्तकः संस्कारसंपादक आश्रयभूतो यः प्राणस्तद्विज्ञानं तदुपासनं तत्सहितानि । प्राणोपासनसहितानि कर्माणि निष्कामस्य पुरुषस्य चित्तसंस्कारार्थान्येवेत्यर्थः । **देवयाजी श्रेयानिति ।** फलकामनया देवान्यो यजते स श्रेयानुतात्मशुध्यर्थमेव स्वर्गाद्यासंगं हित्वा यो यजते स आत्मयाजी श्रेयानिति प्रश्नं कृत्वात्मयाजी श्रेयानिति निरूपितं शतपथाख्ये शुक्लयजुर्वेदब्राह्मणे कामानुपघातसहितं मे ममाङ्गमनेन कर्मणा संस्क्रियत इति संस्कारार्थत्वेनैव करोति न कामवशग इत्यर्थः । **महायज्ञैरिति** । ब्राह्मी—ब्रह्मज्ञानार्हा । तनुरित्यनेन तनुस्थ आत्मान्तःकरणं लक्ष्यते तास्थ्यात् । मञ्चाः क्रोशन्तीतिवत् । **आत्मज्ञानप्रतिबन्धेत्यादि** । निर्माष्टर्यै- निर्माजनाय निराकरणायेत्यर्थः । **आदर्शनिर्माजनवदिति** । दर्पणनिर्माजनं यथा तत्संस्कारकं नतु प्रतिबिम्बदर्शने तस्य प्रत्यक्षत उपयोगस्तद्वत्कर्माणि चित्तसंस्कारकाणि मलिन-प्रतिबिम्बापहारद्वारात्मज्ञानैकत्वसाधकानि न तु प्रत्यक्षत आत्मज्ञानं कर्मभ्य उत्पद्यते । **निरर्थकत्वादिति** । न केवलं श्रुतिप्रामाण्याज्ज्ञानिना कर्माणि न कर्तव्यानीति । किन्तु "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति कुमारिलभट्टकृतश्लोकवार्तिकवचसा निष्प्रयोजनत्वादपीत्यर्थः । [ पृ. ४ ] **अत्यरेचयदिति ।** संन्यास एव विशिष्यत इत्यर्थः । **नहीति** । यथेष्टदेशं प्रति गन्तव्यमिति नाविकेनातरग्रहणपूर्वकमुक्ते न कोऽपि न गच्छत्यपि तु गच्छतीत्यर्थः । **सिषाधयिषतीति** । उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्चेति चतुर्विधा क्रियात्मा तु न तथेत्याह—**स्वभावसिद्धश्चेत्यादिना** । उत्पाद्यः पुरोडाशादिः । विकार्यः सोमादिः । आप्यो मन्त्रादि । संस्कार्यो व्रीह्यादिः । इति क्रमेणोदाहरणानि । विचिकारयिषितः—विकारयितुमिष्टः । संचिकीर्षितः—संस्कर्तुमिष्टः । **अन्येनान्यादिति** । अन्येन—मृदादिचूर्णेन । अन्यद्भाण्डादि । [ पृ. ५ ] **व्यावृत्तबाह्यबुद्धेरिति** । बाह्यविषयाद्विरक्तचेतस इत्यर्थः । **प्रवृत्तिलिङ्गादिति** । शिष्यस्य प्रश्ने प्रवृत्तिराचार्यस्य प्रतिवचने तत्सामर्थ्यादि-

त्यर्थः । यद्यपि सामान्यतश्चेतनावतोऽधिष्ठातृत्वं ज्ञातं तथापि विशेषतोऽज्ञातत्वाच्छिष्यस्य प्रश्ने प्रवृत्तिरिति विवृणोति—**रथादीनामिति** । **करणानीति** । ‘ अन्यानधीनव्यापारवत्त्वे सति कार्यजनकत्वं करणत्वम् ’ इति करणत्वलक्षणादन्यः कोऽप्यधिष्ठाता करणानामवश्यः कल्पनीयः । मनआदीनां करणत्वं च “ अन्यत्रमना अभूवं नादर्शम् ” इति लौकिकानुभवबलात्स्पष्टम् । प्रदीपवत्तस्याचेतनत्वमपीत्यतोऽधिष्ठातुरवश्यमपेक्षा । प्रेषितमिवेतीवशब्दाध्याहारेण व्याख्याने किं बीजं तदाह—**न त्विति** । **आत्माविविक्तनित्यचित्स्वरूपतयेति** । अविविक्तमपृथग्भूतं नित्याचित्स्वरूपं यस्य तद्भावस्तेन । ‘ विचिर् पृथग्भावे ’ इत्यस्य क्तान्तं रूपं विविक्तमिति । मनो ब्रह्मचैतन्येन नित्यमभिन्नमतो ब्रह्म तस्य मनसो विषयेषु प्रवृत्तौ निमित्तमात्रं भवति । अत्रार्थे दृष्टान्तमाह—**नित्यचिकित्साधिष्ठातृवदिति** । “ पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः । ” इत्युक्त्यनुसारं सर्वदा राजादीनां धनवतां ‘कोऽपि मामभ्यवहार्ये विषादिमिश्रेण घातयिष्यति ’ इति भीतिर्भवति ततस्ते स्वसमीपे चकोरादिपक्षिणो नीलादीन्मर्कटजातिविशेषांश्च विषपरीक्षकत्वेन ख्यातान् पालयन्ति । भोजनसमयेऽखिलाभ्यवहार्यपदार्थभाण्डं तत्पुरतः स्थापयन्ति स च चकोरादिर्नीलादिवानरो वा यं पदार्थं भुङ्क्ते तमेव ते भक्षयन्ति नान्यं पदार्थं तेनाभक्षितम् । एवं च चकोरादिः केवलं समीपस्थित्या तत्तत्पदार्थभोजने तदभोजने वा राज्ञः प्रवृत्तौ निमित्तमात्रं न चैवं भुङ्क्ष्व च मा भुङ्क्ष्वेति प्रवर्तयति निषेधति वा तद्वदात्माविविक्तचित्स्वरूपतया निमित्तमात्रम् । शब्दार्थस्त्वेवम् । नित्यं या चिकित्सा व्याधिप्रतिकारः संशयो वा तदर्थमधिष्ठाता समीपस्थितिमांश्चकोरादिस्तद्वत् । कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये चेति वार्तिकेन सन् । **प्रकरणादिति** । इन्द्रियसंनिधानादित्यर्थः । [ पृ. ६ ] संपूर्णश्लोकार्थमाह—**करणानामिति** ॥ १ ॥

[ प्रकाशिका ] [ पृ. ६ ] **धन्य इति** । अधिकारीत्यर्थः । **कारणत्वादिति** । कर्तुरधीनतया क्रियाजनकत्वादित्यर्थः । **प्राण्यङ्गत्वादिति** । “ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ” पा. सू. २।४।२ इति सूत्रेण ॥ १ ॥

अथ प्रथमखण्डे द्वितीयमन्त्रः ॥ १।२ ॥

[ पदभाष्यम् ] [ पृ. ७ ] **असावेवंविशिष्ट इति** । अयमाशयः । मन-

आदीनां प्रेरकः क इति प्रश्नस्यायं देवदत्तादिः प्रेरक इति प्रतिवचनेन भाव्यमत्र तु श्रोत्रस्य श्रोत्रमित्यादि प्रतिवचनमुक्तं तदननुरूपमिति शङ्का। समाधानं तु यथा लविता(खण्डकः)-स्वव्यापारवांल्लवनसाधनभिन्नो लोकेऽस्ति तद्वदत्र श्रोत्रादिव्यतिरिक्तस्तत्साधनवान् स्वव्यापारवांश्चान्यो नास्ति किन्तु श्रोत्रादीनां संहतानामालोचनसंकल्पनिश्चयस्वरूपेण व्यापारेण तद्भिन्नस्तदसंहतश्च कश्चिच्चेतनावाननुमीयते। अनुमानप्रकारश्चेत्थं—श्रोत्रादयः स्वविजातीयस्याङ्गभूताः संहतत्वाद्गृहादिवत्। अनेनानुमानेन श्रोत्रादीनामङ्गी सिद्धः। यदि सोऽपि संहतः स्यात्तर्हि गृहादिवदचेतनः स्यात् ततस्तस्याप्यन्योऽङ्गी तस्याप्यन्य इत्यनवस्था स्यादतस्तत्परिहारायासंहतश्चेतनो गम्यते ततस्तं सर्वसाक्षिणं लक्षयितुं युक्तमेवेदृशं प्रतिवचनमिति। **अवगम्यत इति**। नित्यज्ञानव्यञ्जकत्वात्। फलावसानस्य फलनिष्पत्तेर्लिङ्गं व्यापारस्तेन तदङ्गी लक्ष्यत इत्यर्थः। [ पृ. ८ ] **असंहत इति**। श्रोत्रादिभिरिति शेषः। [ पृ. ९ ] **विद्वद्बुद्धिगम्यमिति**। अत्र विद्वत्पदेन ब्रह्मनिष्ठो ग्राह्यः। **आन्तरेणेति**। हृदयगुहायां विद्यमानेनेत्यर्थः। **चैतन्यज्योतिषादीपितम्**। अदीपितमिति च्छेदः। **निर्देष्टुमिति**। "निर्देशे प्रथमा प्रोक्ता सैव चामन्त्रणेष्वपि" इत्युक्तेः। रथादिवत्प्राणस्याचेतनत्वादित्याह-**नहीति** [ पृ. १० ] **सामर्थ्यादिति**। ज्ञात्वामृता भवन्तीति वाक्ये ज्ञानेनामृतत्वप्राप्तिरुच्यते। ज्ञानस्य च श्रोत्राद्यात्मभावत्यागमन्तरेणासंभवाच्छ्रोत्राद्यात्मभावस्त्यक्तव्य इत्यर्थः। **विशिष्टधीमत्त्वमिति**। विशिष्टधीः सर्वं ब्रह्मेति बुद्धिः। अतिमुच्येत्यस्यार्थान्तरमाह-**अथवेति**। पूर्वस्मिन्पक्षे जीवन्मुक्तिरस्मिन्पक्षे विदेहमुक्तिर्बोध्यते। "न तस्य प्राणा उत्क्रामन्ति" इति श्रुत्या शरीरान्तरोत्पत्तौ कारणाभावात्प्रारब्धकर्मणां भोगेन क्षयाच्छरीरपाते विदुषो मुक्तिरवश्यंभाविनी॥ २ ॥

[ वाक्यभाष्यम् ] [ पृ. ७ ] **निमित्तत्वार्थमिति**। विशेषरहित आत्मा मनआदिप्रवृत्तौ निमित्तभूत इत्यर्थः। **विक्रियादिविशेषरहितस्येति**। क्रियागुणसंबन्धानां विशेषाणां व्यावर्तकधर्माणामात्मनि दर्शयितुमशक्यत्वात्क्रियादिमत्वे च घटादिवदनात्मप्रसंगादिति भावः। अनुगमं प्रश्नपूर्वकमाह—**कथमित्यादिना**। **शब्दोपलब्धृरूपतयेति**। शब्दाधिगन्तृस्वरूपतयेत्यर्थः। अयं भावः। शक्तिश्च सत्तावतः प्रकाशमानस्यैव पदार्थस्य भवति नाविद्यमानस्य वन्ध्यापुत्रादेः। "अस्ति भाति प्रियं रूपं नाम चेत्यं-

शपंचकम् । आद्यत्रयं ब्रह्मरूपम् ” इत्युक्त्या सत्तावान्प्रकाशवांश्चात्मैव न श्रोत्रादीनीन्द्रियाणि । तत आत्मन एव शब्दावभासकत्वशक्तिर्नेन्द्रियाणां तत्र भासमाना त्वात्मनिमित्तेति । क्षत्रस्य—क्षत्रियजातिविशिष्टपुरुषस्य । क्षत्रं—क्षात्रं कर्म । **तद्वदिति**। उपलब्धुरात्मनः सर्वव्यापित्वेन संबन्धाच्छ्रोत्रादिषूपलब्धृत्वव्यवहारः। [ पृ. ८ ] बुद्ध्वेति । अस्याध्याहृतस्य पदस्यामृता भवन्तीत्यनेन संबन्धः । तादात्म्येनाध्यारोपितो योऽनवबोधनिमित्तोऽज्ञाननिमित्तो बुद्ध्यादिः संसारस्ततो मोक्षणं तादात्म्याध्यासनिवृत्तिर्दृष्टं फलम् । अमृता भवन्तीति विदेहमुक्तिरदृष्टं फलम् [ पृ. ९ ] **अन्यस्मिन्निति** । शरीर इति शेषः । **अप्रतिसंधीयमान इति** । कर्मरूपनिमित्ताभावाच्छरीरान्तरं स्वीकर्तव्यमिति निवेशाभावादित्यर्थः । कर्माणि कदा शरीरान्तरमुत्पादयन्ति तदाह—**सतीत्यादिना** । **सर्वकर्मारम्भेत्यादि** । सर्वेषां यज्ञादिकर्मणां य आरम्भस्तत्र निमित्तभूतं वर्णाश्रमवयोऽवस्थाद्यभिमानरूपमज्ञानं तद्विपरीतात्मविद्या तत्स्वरूपेणाग्निना विप्लुष्टत्वाद्दग्धत्वात्कर्मणां संबन्धो नोपपद्यत इत्यर्थः । अत्र कर्मणामिति षष्ठ्या नोपपद्यत इत्यनेनाध्याहृतेन संबन्धः । ननु कृतकत्वादिदममृतत्वमनित्यमिति शङ्कां निराकुर्वन्नाह—**शरीरादिति** । अनादिसंसारपरंपरयाहं पूर्वं शरीर्यभूवं पश्चाच्च भविष्यामीति यः शरीरादिप्रवाहस्तत्सातत्यं यत्तस्य प्रतिसंन्धानं धर्माद्यधिकारित्वाध्यासः कामादिदोषकल्पनं चैतदपेक्षयाध्यारोपितो यो मृत्युस्तदपेक्षयामृतत्वस्योक्तिस्तेषामौपचारिकी । वस्तुतस्तु ते पूर्वमेवामृता इत्यर्थः ॥ २ ॥

[ प्रकाशिका ] [ पृ. १४ ] **लिङ्गदेहं हित्वेति** । एतन्मते जीवन्मुक्तिर्नाङ्गीक्रियते केवलं विदेहमुक्तिरेवात एवमुक्तिः । श्रीभाष्ये समन्वयाधिकरणे श्रीरामानुजाचार्यैरेवंप्रकारेण जीवन्मुक्तिः खण्ड्यते । तथाहि—का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेन्माता मे वन्ध्येतिवदसंगतार्थवचनम् । यतः सशरीरत्वं बन्धोऽशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययस्तस्य सशरीरत्वनिवृत्तिरिति । न । मिथ्येतिप्रत्ययेन सशरीरत्वं निवृत्तं चेत्कथं सशरीरस्य मुक्तिः । अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त इति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते स जीवन्मुक्त इति चेन्न ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वाद्बाधकज्ञानस्य । कारणभूताविद्याकर्मादि-

दोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वाद्द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता । किंच "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" छां. ६।१४।२ इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति । सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता "वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्" आ. ध. सू. २।९।२१।१३—१७ इति अनेन ज्ञानमात्रान्मोक्षो निरस्तः । अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति ॥२ ॥ ३ ।४। ५ । ६ । ७ । ८ ॥

अथ प्रथमखण्डे तृतीयमन्त्रः ॥ १।३ ॥

[पदभाष्यम्] [पृ. १० ] ननु सर्पाद्यधिष्ठानभूता रज्जुर्यथा विषयरूपा तथा श्रोत्राद्यध्यासाधिष्ठानभूत आत्मा विषयभूतः स्यादिति शङ्कां निवर्तयितुमाह—**यस्मादिति** । आदिमध्यावसानेष्वव्यभिचारादध्यस्तस्याधिष्ठानमेव स्वरूपं विषयता च न पदार्थधर्मस्ततोऽप्रयोजकः शङ्काकर्तुर्हेतुरित्यर्थः । ननु तर्हि ब्रह्मणोऽविषयत्वाच्छास्त्राचार्योपदेशोऽपि तद्विषयको न संभवतीति चेत् । इष्टापत्तिः । स चोपदेशोऽपि न वास्तव इत्याह—**इन्द्रियमनोभ्यां हीति** [ पृ. ११ ] **जातिगुणक्रियाविशेषणैरिति** । ब्राह्मणोऽयमिति जातित उपदेशः । शुक्लोऽयमिति गुणत उपदेशः । पाचकोऽयमिति क्रियात उपदेशः । राजपुरुष इति विशेषणत उपदेशः । "चतुष्टयी शब्दानां प्रवृत्तिः" इति पातञ्जले महाभाष्ये तु शब्दप्रवृत्तिबीजत्वेन चतुर्णां जातिगुणक्रियासंज्ञानां ग्रहणं तत्र जातिगुणक्रियाणामीदृशान्येवोदाहरणानि संज्ञायास्तु डित्थोऽयमित्युदाहरणम् । संज्ञाया विशेषणमध्यपातान्न पातञ्जलभाष्येणास्य विरोधः । नन्वेवमनुपदेश्यतैव प्राप्तेति चेन्न । यतः शिष्यस्याज्ञत्वेन भेदग्रहोऽस्त्येव । आचार्यस्यापि तदीयभेददृष्ट्या व्यावहारिक उपदेश आगमतः संभवतीत्याह—**अत्यन्तमेवेत्यादिना । विदितं नामेति** । विदितमिति कर्मणि क्तः । कर्म च "कर्तुरीप्सिततमं कर्म" पा. सू. १।४।४९ इति सूत्रेण कर्तुः क्रिययाप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यादित्यर्थकेन निरुक्तं तदेव स्पष्टमुच्यते विदिक्रिययाति-

**शयेनाप्तमिति** । **व्याकृतमिति** । नामरूपाभ्यां स्पष्टीकृतमित्यर्थः । वेदितुरन्येन वस्तुना विदितेन भवितव्यमविदितेन वा । तृतीया गतिस्तु न संभवति । [ पृ. १२ ] ततो विदितत्वाविदितत्वनिषेधेन वेदितुः स्वरूपं ब्रह्मेत्येवागमस्य तात्पर्यमित्याह—**न हीत्यादिना** । [ पृ. १३ ] **न तर्केत इति** । "नैषा तर्केण मतिरापनेया" क. २।९ "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" क. २।२३ मुं. ३।२।३ इत्यादिश्रुतिवचनानुरोधादित्यर्थः ॥ ३ ॥

[ वाक्यभाष्मम् ] [ पृ. १० ] **उक्तेऽपीति** । तत्त्व इति शेषः । **पर्यनुयोग इति** । अनुयोगः प्रश्नः । परीत्युपसर्गेण तद्विपरीतता बोध्यते । प्रश्नविपरीत इत्यर्थः । उत्तर इति यावत् । अप्रतिपत्तेरिति हेत्वर्थे पञ्चमी । उक्तेऽपि ( तत्त्वे ) अप्रतिपत्तेरिति पर्यनुयोगे हेतुरित्यन्वयः । एवं चायमस्याः पङ्क्तेरर्थः । आचार्येणोक्तेऽपि तत्त्वे शिष्यस्य तत्प्रतिपत्तिस्तज्ज्ञानं नासीदतः पुनरुत्तरं दीयते । **इन्द्रियविषयत्वादिति** । "मनःषष्ठानीन्द्रियाणि" भ. गी. १५।७ इत्युक्त्या मनसोऽपीन्द्रियत्वमेव । **न विद्म इति** । न विद्मो न विजानीम इत्यादिद्विरुक्तिः सर्वथान्तःकरणाविषयत्वख्यापनार्था । **अनुशिष्यादिति** । मन आदिकरणजातमिति कर्तृपदम् । ब्रह्मेति कर्मपदम् । [ पृ. ११ ] **प्रवृत्तिनिमित्तमिति** । ब्रह्मानुशासनस्य प्रवृत्तिनिमित्तमित्यर्थः । आक्षेपपरतया व्याख्याय शङ्कोत्तरत्वेन व्याचष्टे—**अथवेति** । **यथैतदिति** । जातिक्रियागुणादिशून्यत्वात्प्रकारान्तरेण व्याख्यानं न संभवतीत्यर्थः । **ज्ञात्रन्तराभावादिति** । अन्यो ज्ञाता ज्ञात्रन्तरम् । **व्यक्तमेवेति** । व्यक्तं कार्यं तस्माद्व्यावृत्तं ब्रह्मेत्यर्थः । विज्ञानानपेक्षत्वादिति संग्रहवाक्यं विवृणोति—**यद्धीति** । नन्वात्मा यद्यप्यन्यतो विज्ञानं नापेक्षते तथापि स्वग्राहकत्वात्स्वस्मादेव विज्ञानमपेक्षेत तेन विज्ञानानपेक्षत्वमसिद्धमित्याशङ्क्याह—**न च स्वत इति** । एवं चानपेक्षत्वादेवात्रापेक्षाशब्दो न घटते । स्वग्राहकत्वमपि न संगच्छते स्वस्मिन्वृत्तिविरोधादित्यर्थः । अत्रार्थे दृष्टान्तमाह—**प्रदीप इति** । [ पृ. १२ ] ननु प्रदीपस्तैजसस्तस्य तैजसान्तरानपेक्षायामपि व्यवहारे ज्ञानस्य विजातीयज्ञानापेक्षा यथा तथा ब्रह्मणोऽपि विजातीयज्ञानापेक्षा भवेदिति चेत्तत्राह—**न चैवमित्यादिना** । **विरोध इति** । ज्ञानानपेक्षत्वे लौकिकानुभवस्य शास्त्रस्य च विरोध इत्यर्थः । विरोध इति पूर्वपक्षस्यैव व्याख्यानमाह—**स्वरूपविज्ञान इत्यादि** । अन्यत्वादित्युत्तरं

व्याचष्टे—**न कस्मादित्यादिना** । ब्रह्मणो विज्ञानानपेक्षत्वं जीवस्य तु सोपाधिकत्वाद्विज्ञानसापेक्षत्वमित्युभयोर्भेदान्न जानाम्यात्मानमित्यादेर्न विरोधः । बुद्ध्यादीनीति । स आत्मेति । जीव इत्यर्थः । कार्यं शरीरं करणानीन्द्रियाणि बुद्ध्यादौ देहेन्द्रियादिसमुदाये य आत्माभिमानप्रवाहोऽनादिजन्मपरम्परासंस्कारमूलस्तस्याविच्छेदरूपमनिर्वाच्यमज्ञानलक्षणं चिन्हं यस्य चित्प्रतिबिम्बस्य स तथोक्तः । अत्रानन्दज्ञानोक्तिर्विशेषतो ध्येया । तथाहि—चित्तत्त्वं ह्यनिर्वाच्यमज्ञानं चैतन्यमवच्छिद्य स्वावाच्छिन्ने यथास्वरूपावभासं प्रतिबिम्ब्य लौकिकाद्यध्यासहेतुर्भवति । तस्मादविवेकात्मको जीव इत्युच्यते । बुद्धेरन्तःकरणस्य यथा यथा नीलपीताद्याकारावभासा जायन्ते तथा तथा चित्प्रतिबिम्बः प्रमातृत्वादिरूपेण भातीति तत्प्रधानोऽध्यस्तस्य विशिष्टस्य तत्सत्तयैव सत्त्वाद्विशिष्टान्तर्निविष्टो य आत्मा नित्यचित्स्वरूपः स एव सारो यस्मिन्स तथोक्तः । बुद्धिपरिणामरूपाणां नीलपीतादिप्रत्ययानामुत्पत्तिविनाशवत्त्वात्तदुपरक्तरूपेणानित्यं चैतन्यं यत्रावभासते सोऽन्यो जीवः । सर्वाण्येतानि जीवविशेषणान्यन्यत्वस्फुटीकरणार्थानि न केवलमनित्यत्वम् । विशिष्टोपाधिरूढतया विज्ञानस्य तद्धर्मतयैवावभासते मनुष्योऽहं जानामीति प्रतिशरीरं विलक्षणमपि चैतन्यमवभासते विशिष्टभेदादित्यर्थः । **अन्तर्गतेनेति** । बुद्ध्यादिविशिष्टान्तर्गतेन चित्स्वरूपेण तादात्म्याद्बाह्योऽनात्मापि लौकिकैर्बुद्धिविशिष्ट आत्मेत्युपगत इत्यर्थः । तद्विलक्षणः— बुद्ध्यात्मा चैतन्यस्वरूपात्मविजातीयः । चैतन्यस्वरूपात्मा नित्यविज्ञानः । अयं तु जीवो विज्ञानाभासरूपप्रत्ययैरनित्यैर्विशिष्टत्वादनित्यविज्ञानः । परमार्थतस्तु नित्यविज्ञानात्मनः सुखित्वं दुःखित्वं च नास्ति किन्तु प्रातीतिकं तदिति बोधयति—**लौकिकैरित्यनेन** । **तत्र हीति** । नित्यविज्ञानस्वरूपाच्छिन्ने जीवात्मनीत्यर्थः । [ पृ. १२ ] लौकिकविरोधं परिहृत्य शास्त्रीयं विरोधं परिहर्तुमाह—**तत्त्वमसीति** । तत्त्वमसीति श्वेतकेतुं प्रत्युपदेशः । निरुपाधिकस्यात्मन उपदेष्टुमशक्यत्वात्तत्त्वमस्याद्युपदेशकारीणि श्रुतिवाक्यानि निष्फलानीति भावः शङ्काकर्तुः । वस्तुत आत्मनोऽनुपदेश्यत्वेऽप्युपाधिविशिष्टस्य तस्योपदेश्यत्वं संगच्छते तेन चारोपितबन्धनिवृत्तिः फलं ततश्च सार्थकानि तत्त्वमस्याद्युपदेशवाक्यानीत्याह—**लोकाध्यारोपापोहार्थत्वादिति** । लोकैः कृतो योऽध्यारोपस्तस्यापोहोऽपवादः । अध्यारोपो नाम असर्पभूते रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपः । अपवादो नाम—रज्जुविव-

तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनः प्रपंचस्य वस्तुमात्रत्वम् । तदुक्तमभियुक्तैः । सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः । अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः ॥ ननु कथं बोधात्मनो बोधाबोधौ संगच्छतेऽत आह—**तत्र चेति** । तत्र—बोधस्वरूप आत्मनि । विषयत्वसमीक्षम् । आत्मविषयावेव बोधाबोधौ युक्तावित्यर्थः । **अन्यनिमित्तत्वादिति** । अन्यस्मिन्नहंकारादौ निमित्तत्वात् । अयं भावः । लौकिकानामहंकारादौ यौ प्रसिद्धौ बोधाबोधौ तावात्मसंबन्धनिमित्तादेवातो यन्निमित्तमन्यत्र प्रसिद्धिस्तत्र तु तौ मुख्यौ । अत आत्मनि मुख्यौ बोधाबोधौ यथा जलगतौष्ण्यं वन्हिनिमित्तमतो वन्हावौष्ण्यं मुख्यम् । आत्मनिमित्तौ चेदन्यत्र बोधाबोधौ तर्हि निमित्तत्वेन व्यापारवत्वं तत्राह—**राज्यहनी इवेति** । सूर्यसामीप्यमात्रनिमित्ते राज्यहनी भवतो नतु सूर्यः कंचन स्वापयति प्रबोधयति वा । एवंच निमित्तत्वेऽपि व्यापारत्वाभावः । ततश्च यत्र यत्र निमित्तत्वं तत्र तत्र व्यापारवत्त्वमिति व्याप्तिर्न । उक्तोदाहरणे व्यभिचारात् । **अन्यत्र भावाभावयोरिति** । अन्यत्र घटपटादिविषये भावाभावयोरस्तित्वनास्तित्वयोर्निमित्तकारणत्वात् । **उपचर्येते इति** । यथादित्यप्रकाशस्य नित्यत्वेऽपि सूर्यः प्रकाशयिष्यति घटमिति घटनिमित्तं प्रकाशेऽनित्यत्वोपचारस्तद्वदात्मनो बोधस्य नित्यत्वेऽप्यध्यारोपापेक्षया तत्त्वमस्यादिश्रुत्युपदेशः । **यथा सवितेति** । यत आत्मनि बोधकर्तृत्वमन्योपाधिकं स्वतस्तु विज्ञानानपेक्षत्वमेव ततोऽविदितादन्यत्वं तस्य सिद्धम् । **अन्यार्थ इति** । निपातानामनेकार्थत्वादित्यर्थः । **यद्धि यस्याधीति** । यद्यस्योपरि भवति तत्ततोऽन्यदेवेत्याह—**सामर्थ्यादिति** । **अधिभृत्यादीनामिति** । राजा भृत्यादीनामुपरि श्रेष्ठ इत्यर्थः । **तर्कस्त्वनवस्थित इति** । "तर्काप्रतिष्ठानात्" ब्र. सू. २।१।११ इति ब्रह्मसूत्रात् ॥ ३ ॥

प्रथमखण्डे चतुर्थमन्त्रः । १ । ४ ॥

( पदभाष्यम् ) [ पृ. १४ ] अन्यदेवेत्यादिवाक्यस्य योऽर्थः पूर्वं प्रदर्शितस्तत्र लौकिकानां तार्किकाणां मीमांसकानां च प्रतिपत्तिविरोधमूलिका शङ्कास्तीत्याह—**आशङ्का जातेति** । **लोकप्रत्ययविरोधादिति** । लोके ह्युपास्योऽन्यो ह्युपासकश्चान्य इति द्वैतविषयिणी प्रतीतिस्तद्विरोधादित्यर्थः । **तद्वाक्याद्वेति** । अथवा शिष्यवाक्यं निशम्य यद्वाचेत्याद्युत्तरम् ।

**अष्टसु स्थानेष्विति** । " अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च " पा. शि. १३ इति पाणिनीयशिक्षोक्तान्यष्टस्थानानि । विपक्त–संलग्नम् । आग्नेयं–अग्निदेवताकम् । न वाग्रूपमिन्द्रियमेव किन्तु वाक्शब्देन वर्णानामपि ग्रहणं तदाह-**वर्णाश्चेति** । **अर्थसंकेतपरिच्छिन्ना इति** । तदुक्तं–" यावन्तो यादृशा ये च यदर्थप्रतिपादकाः । वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः " इति राम इति पदं रेफाकारमकाराकारविसर्गा एवं क्रमविशेषावच्छिन्ना इति मीमांसकाद्यनुसारेणोक्तम् । स्फोटवादिनो वैयाकरणस्य मतेनाह–**तदभिव्यङ्ग्य इति** । वर्णानामनित्यत्वात्स्फोटवाद एव साधुः । अथ पदस्फोटो वाक्यस्फोट इति द्वयम् । तत्र वाक्यस्फोटः साधीयान् । **अकार इति** । अकारप्रधानोंकारोपलक्षिता स्फोटाभिधा चिच्छक्तिः सर्वा वाक् । लौकिकवर्णमातृकानुसारं कादयो मपर्यन्ता वर्णाः स्पर्शसंज्ञकाः । यरलवा अन्तस्थसंज्ञकाः । शषसहा ऊष्मसंज्ञकाः । **नानारूपा भवतीति** । विवर्तेत इत्यर्थः । **मितमित्यादि** । मितमृक् नियताक्षरपादावसानत्वात् । अमितं यजुः । अनियताक्षरपादावसानत्वात् । स्वरः—साम । गीतिप्राधान्यात् । सत्यं–यथाभूतार्थवचनम् । [ पृ. १९ ] **परिच्छिन्नयेति** । परिमितयेत्यर्थः । **करणगुणवत्येति** । करणं वागिन्द्रियं गुण उपसर्जनं तद्युक्तया । वागिन्द्रियोत्थयेत्यर्थः । **घोषेष्विति** । घोषाः–वर्णाः । या चेतनेषु पुरुषेषु वाक्शक्तिः सा वर्णेषु प्रतिष्ठिता तद्व्यङ्ग्यत्वादित्यर्थः । **संव्यवहारा इति** । शब्दादिव्यवहारा इत्यर्थः । **नियमार्थमिति** । नेदमित्यनेन प्रतिषेधेनात्मनि प्राप्ता या ब्रह्मबुद्धिस्तन्नियमनं क्रियतेऽथवान्यस्मिन्नुपास्ये प्राप्ता या ब्रह्मबुद्धिस्तन्निवृत्तिः क्रियते ॥ ४ ॥

[ वाक्यभाष्यम् ] [ पृ. १४ ] दृढप्रतीत्या इति संग्रहवाक्यं विवृणोति–**अन्यदेवेत्यादिना** । **वाक्प्रकाशहेतुत्वोक्तिरिति** । वाक्प्रकाशे हेतुत्वस्योक्तिः क्रियत इत्यर्थः । एतदेव संग्रहवाक्यं विवृणोति–**येनेत्यादिना** । **अभिधानस्येति** । अभिधानं–शब्दः । अभिधेयः–अर्थः । **अवस्थापनार्थ इति** । आत्मन्येव बुद्धेरुपसंहारार्थ इत्यर्थः । **वस्त्वन्तरजिघृक्षामिति** । अन्यपदार्थग्रहणेच्छामित्यर्थः ॥ ४ ॥

प्रथमखण्डे पञ्चममन्त्रः ॥ १।५।६।७।८ ॥

[ पदभाष्यम् ] [ पृ. १९ ] **मन एवेति** । वृत्तिवृत्तिमतोरभेदादेवमुक्तिः

कामसंकल्पादयो मनस एव वृत्तय इत्यर्थः । **न प्रवर्तत इति** । अव्यवहितत्वात् ॥ ९।६।७।८ ॥

[ वाक्यभाष्यम् ] [ पृ. १९ ] यन्मनसेत्यादिचतुर्णां मंत्राणां समुदितमर्थमाह—**सर्वकरणानामित्यादिना** ॥ ९।६।७।८ ॥

इति प्रथमः खण्डः ॥१॥

अथ द्वितीयखण्डे प्रथममन्त्रः ॥ २।१ ॥

[ पदभाष्यम् ] [ पृ. १७ ] **प्रत्यायित इति** । बोधित इत्यर्थः । **शिष्यबुद्धिविचालनार्थमिति** । अहमात्मानं जानामीति शिष्यस्य ज्ञाधातुनिरूपितकर्मत्वरूपा यात्मनि बुद्धिस्तन्निराकरणार्थम् । वेदान्ताः—उपनिषदः । **मिथ्यैवेति** । वेदितुर्वेद्यस्य च भेदाभावादित्यर्थः । [ पृ. १८ ] **प्रतिपन्न इति** । प्रजापतिनासुरराजो विरोचन इन्द्रश्च " य एषोऽक्षिणि पुरुषो दृश्यते छां. ९।७।९ इत्यादिवाक्येन बोधितौ । तत्र स्वभावदोषाद्विरोचनश्छायापुरुषं विपरीतमपि प्रतिबिम्बपुरुषमेवात्मानं प्रतिपन्नवान् । इन्द्रस्तु स्वभाववैशद्यात्प्रथमोक्तमप्रतिपद्यमानः पुनर्ब्रह्मचर्यमुवास । ततो द्वितीये पर्याये " य एष महीयमानः स्वप्ने चरति " छां. ८।१०।१ इत्युक्तः प्रजापतिना । तदाप्यप्रतिपाद्यमान एव पुनर्ब्रह्मचर्यमुवास । ततः " तद्यत्रैतत्सुप्तः समस्तः संपन्नः " छां. ८।११।१ इत्युक्तः प्रजापतिना तृतीये पर्याये परं तदाप्यप्रतिपन्नः पुनर्ब्रह्मचर्यमुवास । एवमेकाधिकशतसंवत्सरं ब्रह्मचर्यवासात्संजातचित्तशुद्धिरिन्द्रश्चतुर्थे पर्याये " स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य " छां. ८।१२।३ इत्यत्र प्रथमपर्यायोक्तमेव ब्रह्म प्रतिपन्नवान् । अस्यामाख्यायिकायां विरोचनस्य विपरीतप्रतिपत्तिर्द्योतिता । इन्द्रस्य त्वप्रतिपत्तिः । ततो ब्रह्मचर्यवाससंजातदोषक्षयस्य तस्य प्रतिपत्तिर्द्योतिता । एवंच ब्रह्मज्ञानं दोषक्षये सति योग्याधिकारिणाधिगन्तुं शक्यत इति सूचितम् । **लोकेऽपीति** । एवमेव समानमीहमानानां चाधीयानानां केचिदर्थैर्युज्यन्ते । अपरे नेति पातञ्जलमहाभाष्येऽप्युक्तम् । **कश्चिन्न प्रतिपद्यत इति** । मणिर्बिम्बोद्ग्राहे प्रभवति न मृदां चय इत्यर्थः । **अत्र हीति** । अत्र—अतीन्द्रियात्मतत्त्वविषये । सद्वादिनः सांख्याः । असद्वादिनो नैयायिकाः । विप्रतिपन्नाः—विरुद्धज्ञानवन्तः । अर्भकाणि—अल्पानि । **चैतन्यमिति** । चैतन्यमित्यस्य ब्रह्मणो रूपं भवतीत्यनेन संबन्धः । पृथिव्यादीनामित्यादि न

भवतीत्यन्तं हेतुवाक्यम् । यतश्चैतन्यं समस्तभूतानां व्यस्तभूतानां वा देहादिकारणपरिणतानां धर्मो न भवति तथा श्रोत्रादीनामन्तःकरणस्य च धर्मो न भवत्यतस्तद्व्यतिरिक्तस्य ब्रह्मणो रूपम् । **सत्यमेवमिति** । चैतन्यं श्रुतिप्रामाण्याद्ब्रह्मरूपमिति यद्यपि सत्यमित्यर्थः । [ पृ. १९ ] **तथापीति**। उपाधिद्वारैव ब्रह्मणः शब्देन निर्देशनं न स्वतः । ननु जपाकुसुमाद्युपाधिरुपहितेन स्फटिकमणिना संबद्धो भवति ब्रह्मणोऽसंगस्य कथं देहाद्युपाधिरित्याह—**तदनुकारित्वादिति** । जलसूर्यकोदाहरणे घटस्थजले कम्पमाने सूर्यः कम्पत इव घटे भिद्यमाने सूर्यो भिद्यत इवेति मिथ्या तद्धर्मभाक्त्वात्सूर्यस्य जलमुपाधिरित्युच्यते नतु संबन्धात्तथोक्तिर्दूरस्थयोर्जलसूर्ययोः संयोगादिसंबन्धायोगात् । तथैव देहादिषु तारुण्यादिना वृध्यादिभाग्षु चैतन्यस्य मिथ्यादेहधर्मभाक्त्वादुपाधित्वमभिधीयते नतु तत्संबन्धादित्यर्थः । ननु यदि ब्रह्म स्वतश्चैतन्यतया न निरूप्यते तर्हि तदनुभवः कथमित्याह—**स्वतास्त्वाति** । अविषयतया विषयानुपरक्तचित्स्फुरणं ब्रह्मानुभव इत्यर्थः । स्थितं—सिद्धम् । **न निवर्तत इति** । दहरत्वं नातिक्रामति । अल्पत्व एवान्तर्भवति । अध्यात्ममधिदैवमुभयमप्यल्पमेवेति भावः । **भूमाख्यमिति** । बहोर्भावो भूमा । **विचार्यमेवेति** । नाद्यापि निश्चितं त्वयेति भावः । **तर्कतश्चेति** । यद्दृश्यं तदनात्मभूतं यथा घट इत्यनुमानद्वारेत्यर्थः । निर्धार्य-संशयाद्यभावसंपादनेन स्वानुभवं कृत्वा ॥ २ ॥ १ ॥

( वाक्यभाष्यम् ) [ पृ. १७ ] **गृहीतास्थिरताया इति**। पुनःपुनश्चालयित्वा स्थूणाया निखननं क्रियते तेन च तद्दृढता भवति । एवं स्थूणानिखननन्यायेन गृहीतं ज्ञानं पुनःपुनश्चालनया स्थिरं भवति । स्वाराज्येऽभिषिच्य—ब्रह्मज्ञानमधिगमय्य [ पृ. १८ ] **अविषयत्वात्कस्यचिदिति** । देवादिनापि ज्ञातुमशक्यं ब्रह्म । **व्याख्यानान्तरमाह—अथवेति** । **विदिताविदितप्रतिषेधागमार्थानुभव इति** । अन्यदेव तद्विदितादथो अविदितादधीति वेदवाक्यानुभवः । **प्रत्ययत्रयसंगतेरिति** । संगतेरिति हेत्वर्थबोधिका पंचमी । आगमोक्तिराचार्योक्तिः स्वानुभवश्चेति त्रयः प्रत्ययास्तेषां संगत्यर्थमेकस्मिन्विषये संघटनार्थं, संवादाधीनं प्रामाण्यमिति हि तार्किकसमयः । **विचार्येति** । शिष्येणैवं चिन्तितं यद्यहं विदितं ब्रह्मेति प्रतिवचनं करिष्यामि तर्ह्यागमाचार्यप्रत्ययविरोधः स्याद्वेदनाविषयतयाऽब्रह्मत्वप्रसंगः स्यान्मम च वेदितृत्वेनानित्यत्वं प्रसज्येत । ब्रह्म मया न विदितमिति प्रति-

वचनं करिष्यामि चेत्कृषीवलादिभिः पामरैः साम्यप्रसंगः। तूष्णींभावे प्रतिभाभाववत्त्वं प्रसज्येनातो विदितमविदितं चेति प्रत्युत्तरयिष्यामि । संशयाद्यभावाद्विदितं वेदनविषयाभावाच्चाविदितमिति सुपरिनिश्चितः सन्नुत्तरमाहेत्यर्थः। [ पृ. १९ ] **परिनिष्ठितनिश्चितविज्ञानहेतूक्तेरिति** । अयं प्रदर्शितो भवतीत्यत्र हेतुः । परिनिष्ठितं सुसिद्धं तर्कादिना निश्चितं यद्विज्ञानं तस्य प्रतिज्ञा मन्ये विदितमिति तद्रूपस्य हेतोरुक्तेः ॥ २ ॥ १ ॥ ( प्रकाशिका ) [ पृ. १७ ] **उपलक्षणामिति** । अद्वैतमतवदत्र विशिष्टाद्वैतमते निर्गुणं ब्रह्म नांगीक्रियते किन्तु हेयगुणरहितमखिलकल्याणगुणसहितं ततस्तेषां कल्याणगुणानां संग्रहार्थमाह—**रूपामिति**। **व्यत्ययादिति**। सप्तम्यर्थे प्रथमेयम् ॥ १ । २ । ३ ॥

द्वितीयखण्डे द्वितीयमन्त्रः ॥ २ ॥ २ ॥

( पदभाष्यम् ) [ पृ. १९ ] अत्र मंत्रे पूर्वार्धे शिष्यस्य वाक्यचतुष्टयम्। वाक्यत्रयं तु ग्रन्थ एव लिखितं चतुर्थं तु वेद चेति चकारेणाकृष्यते चशब्दान्न वेद चेति भाष्योक्तेः। तच्च वाक्यचतुष्टयमेवम् । १ अहं सुवेदेति न मन्ये २ न वेदेति नो मन्ये ३ वेद चेति नो मन्ये ४ न वेद चेति नो मन्ये । अत्र यद्यपि द्वितीयचतुर्थवाक्ययोः शब्दसाम्यं दृश्यते तथाप्यभिप्रायभेदात्पृथक्करणम् । तथाहि—प्रथमवाक्येन ब्रह्मणो दुर्बोधत्वं दर्शितं, द्वितीयेन तस्य शास्त्रैकगम्यत्वमुक्तं, तृतीयेन संशयराहित्यं, चतुर्थेन सर्वभेदनाशकस्तत्साक्षात्कारः। एवंच दुर्बोधशास्त्रैकगम्यासंदिग्धसर्वत्रभेदशून्यब्रह्माहमस्मि। जानन्नपि भेदबुद्धेरभावान्न जानामीति संपिण्डितोऽर्थः। अयमभिप्रायः। ब्रह्मणि वृत्तिव्याप्तौ सत्यामपि फलव्याप्तिर्नास्ति। तदुक्तं पंचदश्यां विद्यारण्यैः "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्" ७–९० "ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" ७–९२ अन्तःकरणवृत्तिरावरणनिवृत्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमंगीक्रियते। आवरणभंगानन्तरं स्वयंप्रकाशमानं चैतन्यं फलचैतन्यमित्युच्यते तस्मिन्फलचैतन्ये निष्कलंके चित्तवृत्तिर्न व्याप्नोत्यावरणभंगस्य प्रागेव जातत्वेन प्रयोजनाभावादित्यर्थः। अत एव "मनसैवानुद्रष्टव्यम्" बृ.४ । ४ । १९ "यन्मनसा न मनुते" के. १ । ५ । ३ अनयोः श्रुत्योर्न विरोधः। यतः "मनसैवानुद्रष्टव्यम्" बृ. ४ । ४ । १९

इत्यनेन वृत्तिव्याप्तिर्विधीयते " यन्मनसा न मनुते " के. १ । ५ । ३ इत्यनेन फलव्याप्तिर्निषिध्यते । योनस्तद्वेदेत्युत्तरार्धस्येदं तात्पर्यं--अस्माकं सहाध्यायिनां मध्येऽन्यतमो भवदुक्तं " अन्यदेव तद्विदितादथो अविदितादधि " इति वेद स तद्ब्रह्म वेद । गुरुप्रतिपादितार्थसंवादकं शिष्यस्य वचनं " नो न वेदेति वेद च " इति । अतः " अन्यदेव तद्विदितादथो अविदितादधि " इत्यस्य " नो न वेदेति वेद च " इत्यस्य च समानार्थकत्वमिति मंत्रार्थः । **विप्रतिषिद्धामिति** । विरुद्धत्वादसंगतम् [ पृ. २० ] । **वर्जयित्वेति** । यत्र संशयविपर्ययौ भवतस्तत्रेदृशं वाक्यं संगच्छेतापीत्यर्थः । **अनर्थकरत्वेन प्रसिद्धाविति** । "संशयात्मा विनश्यति" भ. गी. ४।४० इति भगवदुक्तेः । **मन्दबुद्धिग्रहणव्यपोहार्थं चेति** । मन्दबुद्धिना कृतं यत्संशयितरूपेण विपरीतरूपेण च ग्रहणं ब्रह्मविषयज्ञानं तन्निरासार्थमित्यर्थः ॥ २ ॥ २ ॥

( वाक्यभाष्यम् ) [ पृ० १९ ] **यथोक्तार्थमीमांसाफलभूतादिति** । " विदितादथो अविदितादधि " इत्यस्य पूर्वोक्तप्रकारेणार्थविचारं कृत्वा प्राप्तं स्वात्मब्रह्मत्वनिश्चयरूपं फलं तेन तद्विरुद्धो विपरीतप्रत्ययो नष्ट इति भावः । [ पृ २० ] अर्थान्तरमाह– **अथवेति** । **वेदैव चाहमिति** । स्वाभाविकाचलत्वेऽपि पर्वतानां यथा पर्वतास्तिष्ठन्तीति व्यवहारस्तथा नित्यविज्ञानस्वरूपत्वेऽपि ब्रह्मणि वेदेति व्यवहारः । चशब्दादाकृष्टस्य न वेद चेत्यस्यार्थमाह–**विशेषविज्ञानं चेति** । " श्रोतव्यो मन्तव्यः " बृ. २ । ४ । ५ इत्यादिश्रुत्या मननादिसहकारेण जातं यद्ब्रह्मात्मकताव्यंजकमन्तःकरणपरिणामरूपं ब्रह्मास्मीति विशेषविज्ञानं तत्परेणान्तःकरणरूपोपाधिनाध्यस्तं न परमार्थतो ज्ञानवत्त्वमात्मन इति न वेद चेति संगच्छत इत्यर्थः । **उपास्यब्रह्मवित्त्वादिति** । अन्ये ह्युपास्यब्रह्मविद इति भावः । **उक्तानुवादादिति** " उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये " ( बृहत्संहिता ) इत्युक्त्या तात्पर्यलिङ्गानां षण्णामन्यतमस्याभ्यासाख्यस्यात्र दर्शनादविषयतयैव ब्रह्मज्ञानं विवक्षितमित्यर्थः ॥ २ ॥ २ ॥

द्वितीयखण्डे तृतीयमन्त्रः ॥ २ ॥ ३ ॥

[ पदभाष्यम् ] [ पृ. २१ ] **समस्तसंवादनिवृत्तमिति** । शिष्याचा-

र्थसंवादसारभूतम् । **मतमिति** । तस्येति कर्तरि षष्ठी तेनेत्यर्थे । " मति-बुद्धिपूजार्थेभ्यश्च " पा. सू. ३।२।१८८ इत्यनेन क्तः । "क्तस्य च वर्तमाने " पा. सू. २।३।६७ इत्यनेन कर्तरि षष्ठ्या विधानात् । यस्य विदुषः कर्तृकर्मादिभावेन ब्रह्मामतं तेन तद्ब्रह्म ज्ञातं तथा येन कर्तृकर्मादिभावेन ज्ञातं स ब्रह्म न जानातीत्यर्थः । [ पृ. २२ ] अविजानतामित्यनेन मूढानां न ग्रहणमित्याह—**नात्विति** । **हेत्वर्थ इति** । पूर्वार्धोक्तेऽर्थे हेतुप्रदर्शक उत्तरार्ध इति भावः । " या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः " भ. गी. २।६९ इति भगवदुक्त्यनुसारं विद्वाननध्यस्तं ब्रह्म पश्यति । अविद्वांस्त्वध्यस्तं ज्ञेयत्वविशिष्टं ब्रह्म पश्यति । तदेतदाह—**अविज्ञातं विजानतामित्यादिना** । लोके व्यावहारिकज्ञानिनोऽप्यनध्यस्तं शुक्त्यादि जानन्ति तेषामध्यस्तं रूप्याद्यज्ञातं, अज्ञानिनां भ्रमवतामेव तदध्यस्तं रूप्यादि विज्ञातं भवतीति भावः ॥ २।३ ॥

[ वाक्यभाष्यम् ] [ पृ. २० ] **श्रौतमिति** । श्रुतेर्वाक्यमेतन्न शिष्यस्याचार्यस्य वेति भावः । **निगमनस्थानीयेनेति** । सिद्धान्तरूपेणेति यावत् । अनुमाने हि पञ्चावयववाक्यानि भवन्ति । प्रतिज्ञाहेतूदाहरणोपनयनिगमनसंज्ञकानि । तथाहि १ पर्वतो वन्हिमान् । २ धूमात् । ३ यो यो धूमवान्स स वन्हिमान् यथा महानसः । ४ अयमपि तथा । ५ अतो वन्हिमान् । तत्र पंचमवाक्यं निगमनसंज्ञकं यथा सिद्धान्तबोधकं तथेदमपि सिद्धान्तबोधकम् । [ पृ. २१ ] नन्वत्यन्ताव्युत्पन्नबुद्धिनाप्यज्ञातं ब्रह्म तस्याप्यनेन वाक्येन ज्ञातं स्यादित्यत आह—**विविदिषाप्रयुक्तप्रवृत्तस्येति** । " आत्मा वारे द्रष्टव्यः " बृ. २।४।५ इति श्रुत्युपदेशमनु वेदनेच्छया प्रयुक्तः सन्प्रवृत्तो य इत्यर्थः । **आत्मतत्त्वानिश्चयेत्यादि** । श्रवणमनननिदिध्यासनैरपरोक्षसाक्षात्कारेण चात्मनिश्चयरूपफलस्याधिगतत्वान्निवृत्ता ज्ञानेच्छेति भावः । सम्यग्दर्शिनः स्वरूपमाह—**स सम्यग्दर्शीति** । अवसितत्वात्—निश्चितत्वात् । सर्वतः—व्यावहारिकाविषयेभ्यः । " किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः " इति श्रुतेः । **विपर्ययेणेति** । अतो विपरीतो मिथ्यादर्शीत्यर्थः । तस्य मिथ्यादर्शित्वं विवृणोति प्रश्नपूर्वकं—**कथमिति** । **अवैदिकस्येति** । चार्वाकबौद्धादीनां ज्ञानं मिथ्येत्यर्थः । ननु चार्वाकादीनामवैदिकत्वेनाप्रमाणत्वेऽपि वेदप्रामाण्यवादिनां कपिलादीनां मतस्य न मिथ्या-

त्वमित्यत आह—**कपिलकणभुगादिसमयस्यापीति** । समयः—मतम् । तन्मतं हि लौकिकपदार्थसत्यतामालम्बते । अनिश्चितेभ्योऽनुमानादिप्रमाणेभ्यः प्रभवति । तद्व्युत्पत्त्या च ब्रह्मज्ञानेच्छा न निवर्तते । मोक्षफलाप्राप्तेः । अतो मिथ्याभूतं तत् । तमोनिष्ठाः—अज्ञानपर्यवसायिन्यः । **अनर्थकं वचनमिति** । पुनरुक्तिसद्भावादिति भावः । **हेत्वर्थत्वेनेति** । यतः पूर्वेषां ब्रह्मनिष्ठानामविषयतया ब्रह्मज्ञानं, अज्ञानिनां च बौद्धादीनां सविषयतया तत्, अतोऽधुनापि सविषयतया यैर्ब्रह्म ज्ञायते तेषां तदविज्ञातं यैश्च विषयराहित्येन ज्ञायते तैस्तद्विज्ञातमिति भावः ॥ २ ॥ ३ ॥

द्वितीयखण्डे चतुर्थमन्त्रः ॥ २ ॥ ४ ॥

[ पदभाष्यम् ] [ पृ. २२ ] **प्रतिबोधविदितमिति** । सर्वबौद्धप्रत्ययेषु सामान्यतयानुगतरूपेण विदितम् [ पृ. २३ ] **प्रत्ययप्रत्यगात्मतयेति** । प्रत्ययस्वरूपेणैवेत्यर्थः । **उपजनापायेत्यादि** । उपजनं—वृद्धिः । अपायः—नाशः । तद्रहितज्ञानस्वरूपस्य नित्यत्वादि सिद्धं भवति । **घटगिरिगुहादिष्विवेति** । यथा भिन्नेषु घटाद्युपाधिषु विद्यमानस्याकाशस्य न लक्षणभेदः स्वरूपैक्यमेव तथा भिन्नेषु बौद्धादिप्रत्ययेषु न दृक्स्वरूपभेद इति भावः । एवं—पूर्वोक्तव्याख्यानेन । एकदेशिव्याख्यानं निर्दिश्य दूषयति—**यदा पुनरिति** । एकदेशिमते विक्रियात्मकत्वं प्राप्तं तच्च काणादमते न संभवतीति कश्चिद्ब्रूयादतस्तन्निरासाय तन्मतमुद्भाव्य दूषयति—**यदपि काणादादीनामिति** । ज्ञानमात्मनो विशेषगुण इति ज्ञानोत्पत्तावात्ममनःसंयोगः कारणमिति च काणादमतम् । वेदान्तिमते तु ज्ञानमन्तःकरणस्य विशेषगुणः । "ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" बृ. १।५।३ इति श्रुतेः । **समवैतीति** । गुणगुणिनोः समवायस्य काणादमते स्वीकृतत्वात् । **रागसमवायीति** । रागो रक्तता यथा कृष्णघटोऽग्निसंयोगाद्रक्तो भवति तथा मनःसंयोगादात्मनि चैतन्यमुत्पद्यत इत्यर्थः । पूर्वोक्तं काणादमतं न श्रुतिविरुद्धं किं त्वनुपपन्नमपीत्याह—**आत्मनो निरवयत्वेनेति** । लोके हि प्रदेशवतावयववता द्रव्येणावयववतः पदार्थस्य संयोगो दृश्यते घटपटादौ । आत्मा तु निरवयवस्तेन मनःसंयोगो भवितुं नार्हति । परं काणादा नैतदंगीकुर्वते तैर्युगपत्सर्वमूर्तसंयोगित्वेन सर्वगतत्वमात्मनोऽगीकृतम् । तेन मनसः संयोगोऽपि स्यादिति चेत्तत्राह—**नित्यसंयुक्तत्वाच्चेति** । परदण्डेन परस्ताडनीय

इति न्यायमनुरुध्य काणादाभ्युपगमं गृहीत्वैवायं दोषः। घटादिकालादन्यत्र घटादिस्मृतिः संस्कारजा काणादैरंगीक्रियते तन्न संगच्छेतात्मनः सर्वगतत्वेन घटादिग्रहणकालेऽपि मनःसंयोगस्याविशेषाद्घटादिस्मृतेः प्रसंगात्। एवं च योऽयं नियमः काणादमते 'घटग्रहणादनन्तरं तत्स्मृतिः' इति स चानुपपन्नः स्यादिति भावः। सर्वगतत्वेन सर्वाव्यवधानमात्रत्वं ततश्चात्मनः **संसर्गधर्मित्वं** ग्राह्यं न तु सर्वसंयोगित्वं कल्पनीयमिति यन्मतं तत्राह–**संसर्गधर्मित्वं चेति**। [ पृ. २४ ] **नातुल्यजातीयमिति**। अगुणवदित्यर्थः। एकदेशिव्याख्यानान्तरमनूद्य दूषयति–**यत्पुनरिति**। वेद्यं वेदितुर्वेदनाच्च भिन्नं घटादिवदित्याद्यनुमानविरोधात् स्वसंवेद्यता पारमार्थिकी नोपपद्यतेऽतो बुद्ध्यादावात्मभावमारोप्यात्मनात्मानं वेत्तीति लाक्षणिको व्यवहारः कल्पनीय इत्याह–**तत्र भवतीति**। काणादमते स्वसंवेद्यताया अनंगीकारादात्मनि परसंवेद्यता स्यादिति यन्मतं तन्निराकर्तुमाह–**संवेदनस्वरूपत्वादिति**। बौद्धपक्षाद्वेदान्तिपक्षे वैलक्षण्यं साधयति–**बौद्धपक्ष इति**। तन्मते हि विज्ञानस्य क्षणिकत्वात्क्षणभंगुरत्वमित्यर्थः। किंच तन्मते स्वसंवेद्यत्वेन साक्षिणोऽङ्गीकाराभावान्निरात्मत्वं प्रसज्येत। तच्च श्रुतिविरुद्धम्। प्रतिबोधविदितमित्यस्यार्थान्तरमुद्भाव्य दूषयति–**यत्पुनरिति**। निर्निमित्तो बोध इत्यनेनासंप्रज्ञातसमाधिर्बोध्यते ब्रह्माहमस्मीति चिन्तयतः साधकस्य यावच्चेतोव्यापारो नाम ध्यानध्येयध्यातृभेदज्ञानं तावत् संप्रज्ञातसमाधिः। निवृत्ते तादृशभेदज्ञानरूपे चित्तव्यापारे यः सौषुप्तानन्दसाक्षात्कारवत्परमानन्दस्य साक्षात्कारः सोऽसंप्रज्ञातसमाधिः। तदुक्तं वार्तिककृद्भिः—"अपरायत्तबोधो हि निदिध्यासनमुच्यते" इति। मतान्तरमाह–**सकृद्विज्ञानमिति**। यदा निष्क्रियब्रह्मात्मानुभवो भवति तदा क्रियाभावात्कर्त्रभावेन प्रमातृत्वानुपपत्तौ पुनर्ज्ञानासंभवात्सद्योमुक्तिकारणं सकृद्विज्ञानं प्रतिबोध उच्यते। तदुक्तं–"सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्। अज्ञानमागमज्ञानं सांगत्यं नास्त्यतोऽनयोः" इति। उभयमतेऽरुचिमाह–**निर्निमित्त इति**। अयं भावः। गुरूपदेशादिना जायमानत्वेनागन्तुकत्वाद्बोधो न निर्निमित्तः। यत्र यत्र कार्यत्वं तत्र तत्र सनिमित्तत्वमिति व्याप्तेः। सौषुप्तानन्दसाक्षात्कारोऽपि न निर्निमित्तः। अविद्यानिरोधिवृत्त्यभिव्यक्तचैतन्यस्य तत्र कारणत्वात्। एवं पूर्वकल्पेऽरुचिः। प्रारब्धकर्मप्रतिबन्धाद्वर्तमानप्रमातृत्वाभासस्य निवृत्तेरभावादसकृद्बोधोऽपि संभवतीति सकृद्विज्ञानमिति द्वितीय-

पक्षेऽरुचिः । **प्रतिबोध एव हि स इति ।** सर्वथापि प्रतिबोधपदेनात्मैव बोध्यते प्रतिबोधं साक्षितया भासमानत्वात् । [ पृ. २१ ] निर्निमित्तं स्वतःसिद्धम् । ननु यद्यमृतत्वं स्वतःसिद्धं तर्हि निष्फला विद्येत्याशंकामपाकर्तुमाह—**एवमिति** । अविद्ययानात्मत्वप्रतिपत्तिर्यत्तदात्मनो मर्त्यत्वं तादृशप्रतिपत्तिनिरासार्थं विद्या सफलेति भावः । **आत्मविद्याकृतं वीर्यमिति** । अहं नित्यमुक्त एवेति दृढनिश्चय एव विद्याकृतं सामर्थ्यम् । **समर्थो हेतुरिति** । अमृतं हि विन्दत इत्यत्र हिपदेन हेतुत्वं द्योत्यते । यतोऽविद्ययानात्मप्रतिपत्तिरेव मृत्युरतस्तन्निरासार्थं विद्यारूपो हेतुः समर्थः । सफल इति यावत् । "विद्यैव तन्नाशविधौ पटीयसी " अ. रा. उ. अ. ५।९ इति रामगीतोक्तेः ॥२॥४॥

( वाक्यभाष्यम् ) [ पृ. २२ ] तर्ह्यविषयस्यात्मनो ज्ञानं कथं संपादनीयमित्याकांक्षायामाह—**प्रतिबोधविदितमिति** । वीप्साप्रत्ययानामात्मावबोधद्वारत्वादिति संग्रहवाक्यं तत्र वीप्साप्रत्ययानामिति मध्यमपदलोपी समासः । वीप्साघटिताः प्रत्यया वीप्साप्रत्ययाः । वीप्सा—द्विरुक्तिः । संग्रहवाक्यं विवृणुते—**बोधं बोधं प्रतीति** । वीप्साघटितपदेन सकलत्वस्य बोधो यथा गृहे गृहे महानसम् । **तदाह-वीप्सा सर्वप्रत्ययव्याप्त्यर्थेति । तप्तलोहवदिति** । अयं भावः । तप्तलोहतापको वन्हिर्लोहाद्भिन्नो लोहतापेनानुमीयत एवं सर्वबौद्धप्रत्ययानामवभासेन तदवभासको विज्ञानस्वरूप आत्मानुमीयते । एवं च लोहतापो यथा वन्हिज्ञाने द्वारीभवति तथात्मोपलब्धौ सर्वबौद्धप्रत्ययावभासा द्वारीभवन्ति [ पृ. २३ ] विपर्यय इत्यस्य व्याख्यानमाह—**विषयात्मविज्ञान इति** । विषयेषु बुध्यादिष्वात्मविज्ञाने । अथवोपास्यत्वेन तस्य विषयतया विज्ञाने । **मृत्युः प्रारभते भयमिति** । बुध्यादिसंघातमात्मानं मन्यमानस्योपासकस्य च कर्तृत्वभ्रमनिवृत्तेरभावाद्भयं तस्य दुर्निवार्यमेवेति भावः । " अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति " छां. ७।२५।२ इत्यादिश्रुतिभ्यश्च । **नालम्बनपूर्वकमिति** । पूर्वं कस्यचिदुपास्यस्यालम्बनमाश्रयं कृत्वा तदुपासनसाध्यतयामृतत्वं न विन्दते किन्त्वात्मनैवेत्यर्थः । **आत्मविज्ञानापेक्षमिति** । आत्मविज्ञानेन मर्त्यत्वभ्रमनिवृत्तिमपेक्ष्यामृतत्वं विन्दत इत्युक्तिः । तेन सा लाक्षणिकी । [ पृ. २४ ] मुख्यार्थानुपपत्तौ लक्षणाया अंगीकारान्मुख्यार्थे बाधकमाह—**यदि हीति । अनात्मविज्ञानमिति** । करणे ल्युट् । अनात्मा विज्ञायतेऽनेन तदनात्मविज्ञानं, अनात्मनो जगतो विज्ञानस्य

कारणभूतमनाद्यनिर्वाच्यमात्माज्ञानमित्यर्थः । **कल्प्यत इति** । घटाच्छादकस्य तमसो निराकरणसाधनभूते दीपे यथा दीपेन घटो दर्शित इति व्यवहारस्तद्वदनात्मनिवर्तके ज्ञानेऽमृतसाधनत्वव्यवहार इति भावः । **अनात्माध्यारोपेत्यादि** । अहं मनुष्य इत्याद्यनात्मारोपः सैव माया जीवत्वकल्पकमज्ञानं तदेव स्वान्तस्य मनसो ध्वान्तं तमस्तेनानाभिभाव्यमभिभावयितुं पराजेतुं विनाशयितुमशक्यं लक्षणं यस्य तद्बलमित्यस्य विशेषणम् । अत्रानन्दज्ञानकृतटीकायामर्थकरणे भिन्नः पन्था आद्रियते स वैयाकरणैश्चिन्त्यः । [ पृ. २९ ] **नतु विद्याया बाधक इति** । प्रारब्धानुरोधाद्यावद्देहपातं जायमानो द्वैताभासो विद्यया बाध्यते । विद्यायास्त्वबाध्यत्वमेव । **लोकेऽपीति** । हस्त्यादिभ्यो न्यूनशारीरबलोऽपि मनुजो बुद्धिसामर्थ्यात्तानारोहति । **अतः सिद्धं ज्ञानबलस्य श्रेष्ठत्वं सर्वेषु बलेषु** । प्रतिबोधशब्दस्य यौगिकमर्थमुक्त्वा रूढमर्थद्वयमाह—**अथवेति** । **अशेषविपरीतेत्यादि** । “ वाहिताग्न्यादिषु ” इति वार्तिकेन बहुव्रीहौ निष्ठान्तस्य परनिपातो विकल्पेन विहितस्तदनुसारं निरस्ताशेषविपरीतसंस्कारेणेत्यस्य स्थाने—अशेषविपरीतनिरस्तसंस्कारेणेति साधु । संस्कारेणेत्यन्तं बोधेनेत्यस्य विशेषणम् । अयमर्थः । येन बोधेनाशेषाः सकला विपरीता अविद्याविषयकाः संस्कारा निरस्ताः स प्रतिबोधो युगपत्कृत्स्नाविद्यातत्कार्यनिवर्तकः सद्योमुक्तिकारणभूतो बोध इत्यर्थः । रूढिगतं द्वितीयमर्थमाह—**अथवा गुरुपदेश इति** । व्याख्यानत्रये प्रथममेव प्रतिबोधशब्दस्य व्याख्यानं योग्यमित्याह—**पूर्वमिति । यथार्थमिति** । द्वितीयव्याख्याने सद्योमुक्तिः प्रतिपादिता सा चाशास्त्रीया । तृतीयव्याख्याने गुरूपदेशो द्योतितः परं त्वात्मानुसंधानेन विना केवलगुरूपदेशादपरोक्षज्ञानस्यासंभवोऽतोऽयमपि पक्षो न साधुः ॥ २ ॥ ४ ॥

[ प्रकाशिका ] [ पृ. २२ ] **शेष इति** । प्रतिबोधविदितमित्यस्मात्प्राक् श्रुतमित्यध्याहारः । अध्याहाराभावाच्छङ्कराचार्यकृतमेव व्याख्यानमतिशोभनमेतद्व्याख्यानम् [ पृ. २४ ] **चेदिति** । निपातानामनेकार्थत्वात् ‘ हि ’ इत्यस्य व्याख्यानं चेदिति ॥ २ ॥ ४ ॥

द्वितीयखण्डे पञ्चममन्त्रः ॥ २ ॥ ५ ॥

[ पदभाष्यम् ] [ पृ. २९ ] श्रुत्या महती विनष्टिरित्युच्यते तत्र जिहासामु-

त्पादयितुमाह–**कष्टा खल्विति** । **संसारदुःखबहुलेष्विति** । प्राणिसंघेषु जन्ममृत्युपरंपरारूपं संसारदुःखं बहुलमिति भावः । **जन्मजरेत्यादि** । **अविच्छेदः**–सातत्यम् ॥ २ ॥ ९ ॥

[ वाक्यभाष्यम् ] [ पृ. २९ ] **विपर्यय इति** । अस्मिञ्जन्मनि वेदनाभाव इत्यर्थः । [ पृ. २६ ] ननु विचित्येत्यस्य पृथङ्निकृष्येत्यर्थः कथमत आह–**धातूनामिति** । **विरोधादिति** । यथा भिन्नानामिष्टकानां चयनमेकीकरणं संभवति तथा निरंशस्यैकस्य चिन्मात्रस्य चयनमसंभवीत्यर्थः ॥ २ ॥ ९ ॥

[ प्रकाशिका ] [ पृ. २६ ] **विचिन्त्येति** । अत्र शांकरभाष्ये विचित्येति पाठः । **आप्रयाणमिति** । मरणान्तमित्यर्थः ॥ २ ॥ ९ ॥

इति द्वितीयः खण्डः ॥ २ ॥

अथ तृतीयखण्डे प्रथममन्त्रः ॥ ३ ॥ १ ॥

[ पदभाष्यम् ] [ पृ. २९ ] **वक्ष्यमाणेत्यादि** । उत्तमाधिकारिभिरविषयतया विज्ञेयं ब्रह्म पूर्वमुक्तम् । अधुना मन्दाधिकारिणां कृते सगुणमुपास्यं ब्रह्म प्रदर्श्यते । " तस्यैष आदेश ' इत्यादिना स्पष्टं विधेः प्रदर्शनात् । [ पृ. ३१ ] **ईश्वरसेतुभेत्तृनिति** । ईश्वरस्य सेतवो वर्णाश्रमादिरूपा मर्यादास्तद्भिनाशकान् । स्थेम्ने–स्थैर्याय । [ पृ. ३२ ] **मिथ्याभिमानेक्षणवतामिति** । मिथ्याभिमानपूर्वकं विचारयताम् ॥ ३ ॥ १ ॥

[ वाक्यभाष्यम् ] [ पृ. २७ ] **यत्नाधिक्यार्थेति** । ब्रह्माधिगमेऽधिको यत्नः कर्तव्य इति द्योतयितुम् । **अर्थवादेनेति** । इयं हि वैदिकी पद्धतिर्यत्पूर्वं ' एवं कुर्यात् ' इत्यादिरूपं विधिमुक्त्वा ततस्तत्स्तावकवाक्यं स्तुतिप्रतिपादिन्याख्यायिका वा कथनीयेति । अत्राख्यायिका प्रदर्शिता । **शमाद्यर्थ इति** । " शान्त उपासीत " छां. ३।१४।१ इति श्रुतौ शमो विहितः स च दमादीनामुपलक्षणम् । **अभिमानशातनादिति** । आख्यायिकायामग्न्यादिदेवानामभिमानः शातितः । **विधित्सितामिति** । विधातुमिष्टम् । **व्यावृत्तबाह्येत्यादि** । व्यावृत्ता विनष्टा बाह्या घटादिविषया मिथ्याप्रत्यया मिथ्याज्ञानानि येषां तैरेव ग्राह्यं ब्रह्मेत्यर्थः । अग्न्यादिपराजयकर्तृत्वरूपं चिन्हं परमात्मग्राहकमित्याह–**ब्रह्मेति पर इति** । **परिभूयेति** । अग्न्यादीन्परिभूयेति संबन्धः । **तत्सिद्धिरिति** । जगतो नियतप्रवृत्तिदर्शनेन

तन्नियामकस्येश्वरस्य सिद्धिः । **उच्यत इति**। अनुमानमिति शेषः । शास्त्रार्थस्य शास्त्रप्रतिपाद्यार्थस्येश्वररूपस्य निश्चयार्थमनुमानं निर्दिश्यत इत्यर्थः । अयं भावः । श्रुत्यादिभिरीश्वरस्य सिद्धौ कृतायामप्यनुमानेन विना न निश्चयो वादिनाम् । यतः श्रुत्यादयोऽर्थवादघटिता अर्थवादश्च न स्वार्थप्रतिपादक इति पुनः पुनस्तस्येश्वरस्यास्तित्वविषये वादिनां शंकोदयः । अनुमानेन तन्निश्चयोत्तरमर्थवादशंकाया अनुदय एव । **यदिदमिति** । अस्मिन्ननुमाने जगदिति पक्षः । एतद्भोक्तृकर्मविभागज्ञप्रयत्नपूर्वकमिति साध्यम् । कार्यत्वे सति यथोक्तलक्षणत्वादिति हेतुः । अन्वयिदृष्टान्तः— गृहप्रासादरथशयनासनादिवदिति । व्यतिरेकिदृष्टान्तः—आत्मादिवदिति । आदिपदेनाकाशं गृह्यते नैयायिकमतानुरोधात् । ते ह्याकाशस्य कार्यत्वाभावेन नित्यत्वमंगीकुर्वन्ति । वस्तुतः " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " तै. २।१।१ इत्यादिश्रुतेराकाशस्य कार्यत्वमेव । आत्मैव केवलं नित्यः । अत्र देवगन्धर्वेत्यादिना जगतो यानि विशेषणानि दर्शितानि तानि संसारिभिन्नकर्तृत्वबोधनाय । कार्यत्वे सति यथोक्तलक्षणत्वादिति हेतौ दलद्वयम् । तत्र कार्यत्वादिति प्रथमदलमात्रोक्तावबुद्धिपूर्वकारिकृत्ये विभागज्ञप्रयत्नपूर्वकत्वं नास्तीति व्यभिचारः स्यात्तन्निराकरणार्थं यथोक्तलक्षणत्वादिति द्वितीयं दलम् । द्वितीयदलमात्रोक्तावात्मादिस्वभाववैचित्र्यस्य प्रयत्नपूर्वकत्वाभावात्तत्रातिव्याप्तिः स्यादत उक्तं—**कार्यत्वे सतीति** । आत्मनः कार्यत्वाभाव उक्त एव । **देवगन्धर्वेत्यादि** । कर्मानुसारं तत्तल्लोकप्राप्ता देवगन्धर्वादयः । विविधैर्मनुष्यादिप्राणिभिः स्वस्वकर्मोपभोगः कर्तव्यस्तद्योग्यस्थानानि साधनानि च यत्र वर्तन्ते तादृशमिदं जगत् । तत्प्राकृतशिल्पिभिर्निर्मातुमशक्यमित्याह—**तदत्यन्तेत्यादि** । [पृ. २८] पुनश्च प्राकृतशिल्पिभिस्तस्य दुर्निर्माणत्वे हेतुमाह—**देशकालेत्यादि** । तत्तद्देशे तत्तत्काले तत्तन्निमित्तानुसारं शीतादिनिराकरणार्थं तदंगीकरणार्थं च प्रवृत्तेर्निवृत्तेश्च क्रमो मर्यादा नियता यस्मिंस्तत् । ईदृशं नियतप्रवृत्तिनिवृत्तिमर्यादाकं जगत्केनापि परमेश्वरादन्येन निर्मातुमशक्यमित्यर्थः । **एतद्भोक्तृकर्मेत्यादि** । एतस्य जगत्संबन्धिनो ये भोक्तारः प्राणिनः कर्माणि च तेषां विभागज्ञो यो निर्माता स एवेश्वर इत्यर्थः । तस्य प्रयत्नः पूर्वो यस्मिन् जगति । एतादृशं विचित्रं जगत् भोक्तृकर्मविभागज्ञेन निर्मितं यश्चासौ निर्माता तस्य नित्यत्वेन प्राकृतेष्वनन्तर्भावादीश्वरत्वमिति भावः ।

विपक्षे—व्यतिरेके । यद्विचित्रं कार्यं तद्विभागज्ञप्रयत्नपूर्वकं भवति गृह-प्रासादादिवदित्यन्वयिदृष्टान्तघटिता व्याप्तिः । तक्षादिर्गृहादिसाधनविभा-गज्ञः प्रयत्नपूर्वकं गृहादि निर्मिमीत इति प्रसिद्धम् । यद्विचित्रं कार्यं न तद्विभागज्ञप्रयत्नपूर्वकं भवति यथात्मादीति व्यतिरेक्युदाहरणघटिता व्याप्तिः। कर्मरूपहेत्वन्तरेण विचित्रजगतः सिद्धौ किमितीश्वरांगीकारस्तेन पूर्वोक्ता-नुमाने पक्षे साध्याभाव इत्याह—**कर्मण एवेत्यादि** । **परतन्त्रस्येति** । अयं हि लौकिको नियमो यत्परतंत्रं तन्निमित्तकारणं भवति यथा घट-निर्माणे दण्डादि । कर्म तु जडत्वात्स्वतंत्रकार्यकारि भवितुं नार्हतीत्यतस्तेने-शतंत्रेण भवितव्यं ततस्तस्य कर्मणः स्वातंत्र्यनिमित्तं कर्तृत्वं न किंतु करणत्वम् । कर्तृत्वं नाम—अन्यानधीनव्यापारवत्त्वे सति कार्यजनक-त्वम् । करणत्वं नाम -अन्याधीनव्यापारवत्त्वे सति कार्यजनकत्वम् । “स्वतन्त्रः कर्ता” पा. सू. १।४।५४ “साधकतमं करणम्” पा. सू. १।४।४१ इति पाणिन्यनुशासनात् । कर्मण एवेति चेदिति पूर्वपक्षभूतं संग्रहवाक्यं विवृणुते—**यदिदमुपभोगेत्यादिना** । **सर्वैश्चेति** । ईश्वरकारण-त्ववादिभिरपीश्वरस्य वैषम्यनैर्घृण्यदोषनिरासाय कर्मवैचित्र्यनिमित्तं जग-द्वैचित्र्यमिति स्वीकृतमतस्तदनुसारं कर्मण एव जगत्कर्तृत्वमंगीकर्तव्यं नापूर्व ईश्वरः कल्पयितव्य इति पूर्वपक्ष्याशयः । ईश्वराधिककल्पनयेतीत्यत्रेतिशब्दो हेतौ । **अनपेक्ष्यान्यदिति** । आत्मनोऽन्यत्स्वव्यतिरिक्तं प्रयोक्तृ—अनपेक्ष्य कर्म कर्तुः फलं जनयिष्यतीति न युक्तमिति योजना । स्वभिन्नमर्थात्कर्म-भिन्नं कमपीश्वरादिकं प्रयोक्तारमनपेक्ष्य कर्म कर्तुर्देवदत्तादेः फलं नोत्पाद-यिष्यति । अर्थादीश्वरापेक्षयैव कर्म कर्तुः फलमुत्पादयतीति सिद्धम् । अतः केवलं कर्म न जगतो निर्मातृ । यदि कर्मणः कोऽपि प्रयोक्तापेक्ष्यते तर्हि जीव एव प्रयोक्तास्त्विति जीवकर्तृवादं शङ्कते—**कर्तैवेति** । तत्खण्डनमाह—**नेति** । जीवस्य किंचिज्ज्ञत्वेन विविधकर्मदेशादिज्ञानाभाव इति भावः । जीवस्य देशादिविशेषाभिज्ञत्वं तुष्यतु दुर्जन इति न्यायेनाभ्युपगम्य प्रका-रान्तरेण जीवकर्तृवादं खण्डयति—**यदि हि कर्तेति** । देशादिविशेषाभिज्ञो जीव इष्टानिष्टे जानात्येव स कथमनिष्टं स्वशिरश्छेदं कुर्यात्करोति तु तेन न जीवः कर्मणः प्रयोक्ता । अधुना निमित्तरहितं प्रयोक्तारं विनैव कर्म फला-कारेण परिणमत इति यज्जरन्मीमांसकानां मतं तदाशङ्क्य खण्डयति—**नच निर्निमित्तमिति** । हस्त्यादेश्चर्म यथा कालान्तरेण निमित्तं विनैव

विकारं लभते तद्वत्कर्म जगद्रूपं विकारं लभेतातो नास्ति प्रयोक्तुरपेक्षेति तन्मतं न संगच्छते यतश्चर्मणो विकारोऽप्यातपवाय्वादिनिमित्तसाध्य एव न निर्निमित्तः। अधुना बौद्धमतमाशंक्य खण्डयति—**न चात्मकृतामिति।** बौद्धमते सर्वेषां पदार्थानां क्षणिकत्वात्फलकालपर्यन्तं कर्तुरवस्थानाभावान्न कर्तृसमवेतं कर्म किन्तु क्षणिकविज्ञानेनात्मना कृतं कदाचित्फलस्याकर्षकं भवति। यथायस्कान्तो मणिः पूर्वकाले चेतनेन पुरुषेण प्रयुक्तः कालान्तरे तस्य पुरुषस्याभावेऽपि लोहसांनिध्ये लोहाकर्षको भवतीति। एतत्तु न संगतं यतः कर्म प्रधानकर्तृसमवेतं भवति। प्रधानकर्ता नाम करणादिकारक-प्रेरणापूर्वकं यः कार्यं विधत्ते। य एवं कार्यं करोति कर्ता तेन कर्त्रा सम-वेतं कर्म प्रसिद्धम्। तस्य च फलकालपर्यन्तं स्थायित्वमेष्टव्यम्। यदि कर्तुः स्थितिः फलकालपर्यन्तं नाद्रियेत तर्ह्यकृताभ्यागमः कृतप्रणाशश्च प्रसज्येत। यतो येन कर्त्रा कर्म कृतं स फलकाले नास्ति क्षणिकत्वात्तेन तत्कृतस्य कर्मणो नाश इति कृतप्रणाशः। तथाच येन यत्फलं भुज्यते तत्कर्म तु तेन न कृतमित्यकृताभ्यागमः। किंच योऽहं कर्माकरवं स एव फलं भुञ्ज इति प्रत्यभिज्ञाया हानिप्रसंगश्च। चार्वाकमतमाह—**भूताश्रय-मिति।** चार्वाकमते पृथ्व्यप्तेजोवाय्वाख्यानि चत्वारि भूतानि संभूय शरीर-मुत्पादयन्ति। किण्वादिभ्यो मदशक्तिवदचेतनेभ्योऽपि भूतेभ्यश्चेतनोत्पत्ति-रिति। **साधनत्वादिति।** चार्वाकमतस्य श्रुतिविरुद्धत्वादग्रहणम्। श्रौत-मते पञ्च महाभूतानि जगदुत्पत्तेः साधनभूतानि। साधनानां चायं स्वभावो यत्क्रियाकाल एव तद्व्यापारो भवति नतु क्रियावसान इति सदृष्टान्तमाह—**कर्तृक्रिया इत्यादिना।** चार्वाकपक्षे कर्मवादिपक्षे च दूषणमाह—**भूतकर्म-णोश्चेति।** ननु वायोश्चलनदर्शनाद्भूतानामचेतनत्वेऽपि स्वतः प्रवृत्तिः स्यादित्याह—**वायुवदितीति। असिद्धत्वादिति।** वायौ स्वतः सिद्धप्रवृ-त्तिर्न संगच्छते। यदचेतनं तन्न स्वतःसिद्धप्रवृत्तिमत्। यथा रथादय इत्यनु-मानविरोधात्। नवीनमीमांसकानां मतमाह—**शास्त्रादिति।** " स्वर्गकामो यजेत " इति वैदिकविधानाद्यागादिरूपं कर्म स्वर्गादिफलं जनयति नेश्वरा-दीति सिध्यति। ततश्च कर्मणः फलसाधनत्वसिद्धौ कर्मणो जगदुत्पन्नमिति वक्तुं सुकरमिति भावः। ननु यागकर्तुर्मरणान्तरं स्वर्गेण भाव्यं तावत्कालं यागादिकर्म तु न तिष्ठति तस्य तत्कालमेव नाशात्। ततश्चान्यथासिद्धि-शून्यत्वे सति नियतपूर्वभावित्वमिति यत्कारणत्वस्य लक्षणं वैशेषिकसंमतं

तस्याप्रवेशात्कर्म विफलमिति चेन्नेत्याह—**न च प्रमाणेत्यादिना**। वैदिक-प्रमाणबोधितत्वात्कर्मवैयर्थ्यं तु न योग्यमित्यर्थः। यथौषधपानादिकं कालान्तर-भाव्यारोग्यं शरीरसंस्कारोत्पत्तिद्वारा साधयति तद्वत्कर्म कालान्तरभाविस्वर्ग-मपूर्वोत्पत्तिद्वारा साधयतीति कल्प्यते वैदिकप्रमाणवाक्यानुरोधादिति भावः। [पृ. ३१] नन्वीश्वरः साधनत्वेन श्रुतस्तदन्यथानुपपत्त्या स एव कुतो नाश्रीयत इत्यत आह—**नचेश्वरास्तित्व इति**। पूर्वोक्तार्थापत्तिस्त्वीश्वरा-स्तित्वे न प्रमाणम्। ईश्वरानङ्गीकारेऽपि जगद्रूपकार्यस्य कर्मादिसाधनेन साधयितुं शक्यत्वात्। "द्यावापृथिवी जनयन्देव एक आस्ते" इत्यादि-श्रुतिरपि न प्रमाणमर्थवादशङ्काप्रसंगादिति शङ्काकर्तुराशयः। खण्डयति—**न दृष्टन्यायेत्यादिना**। कर्मवादिभिर्यदपूर्वं कल्प्यते तदसंगतं दृष्टन्याय-त्यागस्यासंगतत्वात्। व्यवहितफलं कर्म चेतनप्रयुक्तमेव भृत्यादिकर्मफल-वदिति हि दृष्टन्यायः। एतदेव विवृणोति—**क्रिया हीत्यादिना**। अन-न्तरफला—समाप्तिक्षण एव फलदायिनी। **फलापवर्गिणीति**। फलेन फलोदयेनापवर्गो नाशः सोऽस्ति यस्या इति। स्वव्यतिरिक्तं फलदातारं नापेक्षत इत्यर्थः। **उत्पन्नप्रध्वंसिनीति**। प्रध्वंसते तच्छीला प्रध्वंसिनी। उत्पन्नमात्रैव फलमदत्वा या विनश्यति सा क्रिया स्वव्यतिरिक्तं फलदा-तारं कालान्तरेऽपेक्षत इत्यर्थः। स्वर्गादिरूपं यागादिफलं कर्मादिविज्ञेन दीयमानमेवांगीकर्तव्यं व्यवहितफलत्वात्सेवाफलवदित्याह—**तस्मादिति**। ईश्वरस्यापि नियामकान्तरांगीकारेऽनवस्थादोषप्रसंग इत्याह—**स चात्मभूत इति**। जीवेश्वरभेदस्तु काल्पनिक इति भावः। ननु राजवदीश्वरः फलदा-तांगीक्रियते चेन्निग्रहादिकर्तृत्वात्तस्य रागादिमत्त्वं प्रसज्येतेत्याह—**नित्य-विज्ञानस्वभाव इति**। सर्वस्यात्मभूतश्चेदीश्वरस्तर्हि संसारिजीवेन सहा-भेदात्तस्य संसारधर्माः संभवेयुरत आह—**संसारधर्मैरस्पृष्ट इति**। प्रशा-सने—अधिकारे। तद्वशेन द्यावापृथिव्यादयो विधृतास्तिष्ठन्तीत्यर्थः। **स्मृत-यश्चेति**। "यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।" भ. गी. १३।३२ "समं सर्वेषु भूतेषु" भ. गी. १३।२७ "ईश्वरः सर्वभूतानां" भ. गी. १८।६० इत्याद्याः। अर्थवादत्वेनोक्तप्रामाण्यं खण्डयति—**न चेति**। **अन-न्ययोगित्वे सतीति**। अयं भावः। "वायव्यं श्वेतमालभेत" इति कर्मविधिसमीपे पठितानि "वायुर्वा क्षेपिष्ठा देवता" इत्यादीनि वाक्या-न्यर्थवादात्मकानि भवन्ति। ईश्वरविषयवाक्यानि तु कर्मविधिसमीपे पठि-

तत्वाभावादर्थवादवाक्यानि भवितुं नार्हन्ति। अनन्ययोगित्वं—अनन्याङ्गत्वम्। अन्यस्य विधेरंगत्वाभाव इति भावः। किं चार्थवादा अपि नानर्थकाः। पदसमन्वयेन जायमानस्य वाक्यज्ञानस्य बाधादर्शनात्। भूतार्थवादानां सत्यत्वाङ्गीकाराच्चेत्यत आह—**न चोत्पन्नमिति**। **अप्रतिषेधाच्चेति**। अस्य संग्रहवाक्यस्यार्थद्वयं भाष्यकृता क्रियते तत्र प्रथमोऽर्थः प्रदर्श्यते—**न चेश्वर इति**। यथा "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" इति प्रस्तुत्य ततः **परं** "नेति नेति" इति परापरयोर्निषेधः क्रियते तद्वदीश्वरप्रतिषेधः श्रुतौ न क्रियते। **प्राप्त्यभावादिति**। निषेधो हि प्राप्तिपूर्वको भवति। "मा हिंस्यात्सर्वा भूतानि" इति श्रुत्या रागतः प्रेमतः प्राप्ता हिंसा निषिध्यते तद्वदत्र प्राप्त्यभाव इति शङ्काकर्तुराशयः। **न्यायस्येति**। इदं जगदेतद्धोक्तृकर्मविभागज्ञप्रयत्नपूर्वकं भवतीत्याद्यनुमानस्योक्तत्वादित्यर्थः। अप्रतिषेधादित्यस्य द्वितीयमर्थमाह—**अथवेति**। प्राभाकरमीमांसकमतेन "स्वर्गकामो यजेत" इति श्रुतिर्यागस्य स्वर्गदाने सामर्थ्यमिति बोधयति। ईश्वरकालादीनां सामर्थ्यं नास्तीति न बोधयति। एकेन वाक्येनार्थद्वयप्रतिपादने वाक्यभेदप्रसंगात्। लौकिकेन कर्त्रा कृते कर्मणि स्रक्चन्दनादिनिमित्तेनातिशयो दृष्टस्तत्सामान्याद्वैदिके कर्मणि कर्मव्यतिरिक्तमीश्वरकालादीनां निमित्तान्तरत्वं स्वीकर्तव्यमित्याह—**न च निमित्तान्तरनिरपेक्षमिति**। किंच न केवलेन कर्मणा गतार्थता तस्य विनष्टत्वादित्याह—**न च विनष्टोऽपीति**। **सेव्यबुद्धिवदिति**। अनेन पंचदिनपर्यन्तं सेवितोऽहमिति ज्ञानवान्स्वामी नष्टायामपि सेवायां मासान्तरे सेवकाय वेतनं ददाति तद्वदनेनानुष्ठितो याग इति संस्कारवानीश्वरो नष्टेऽपि यागे यागकर्तुर्मरणानन्तरं तस्मै फलं यच्छतीति भावः। [पृ. ३०] ननु लौकिककर्मफलसाधने चेतनापेक्षायामपि वैदिककर्मणि तादृशसाधनापेक्षाभावादीश्वरो नांगीकर्तव्य इति शंकामपाकर्तुमाह—**नतु पुनः पदार्था इति**। **यागादेः कर्मण इति**। कालान्तरभाविफलस्य यागादिकर्मणः स्वर्गादि फलं विज्ञानरहितकर्त्राश्रयमित्यसंगतमतस्तत्र यादृशदेशकालादिनिमित्तमालंब्य कर्म कृतं तद्विषयः संस्कारस्तथा फलविपाकः फलाभिमुखत्वं कर्मणां यत्तत्संस्कारस्तद्विभागसंस्कारश्च फलदानेऽपेक्ष्यते सच देशकालादिविज्ञस्यैव बुद्धौ भवेदतस्तादृशदेशकालादिविभागज्ञ ईश्वरोऽङ्गीकर्तव्यः। **सेवादीत्यादि**। सेवारूपकर्मफले यथा सेवादिकर्मानुरूपफलज्ञोऽपेक्ष्यते न केवलं सेवैवं फलदायिनी तद्वदित्यर्थः। **यत्साक्षादपरो-**

**क्षादिति** । यद्ब्रह्म साक्षादव्यवहितं केनचिद्द्रष्टुरपरोक्षादगौणम् । एवमनुमानादि प्रदर्श्य निरीश्वरवादं खण्डयित्वेश्वरवादिषु भेदवादिनः खण्डयति—**स एव चात्रात्मेति** । भेदवादिनो हि मत इदमनुमानं—जीव ईश्वराद्भिन्नो विरुद्धधर्माक्रान्तत्वात् । यो यद्विरुद्धधर्माक्रान्तः स तद्भिन्नो यथाश्वमहिषाविति । परमेतदनुमानं श्रुतिविरुद्धं यतः श्रुतौ भेदनिन्दा, अभेदोपदेशश्च श्रूयते तदेतदाह—**नान्योऽतोऽस्तीत्यादिना** । [ पृ. ३१ ] ज्ञानशक्तीत्यादिनोक्तौ पूर्वोत्तरपक्षौ विवृणुते—**यदुक्तमित्यादिना** । **सहस्रश इति** । "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन" छां. ६।२।१ इत्याद्याः । दूषणान्तरं वक्तुमनुवदति—**यदुक्तमिति** । ज्ञानादिलक्षणभेदादित्यत्र लक्षणभेदादिति यदुच्यते तन्न संगतं लक्षणभेदस्याद्वैतिमतेऽस्वीकृतत्वादित्याह—**नानभ्युपगमादिति** । जीवविषये त्रिविध एव विकल्पः संभवति १ जीवाः किं बुद्ध्यादिविशिष्टाश्चित्प्रतिबिम्बा धर्मित्वेन गृह्यमाणाः । २ अथवा देवमनुष्यादिशब्दवाच्याः सचितिका देहाः । ३ किंवा विलक्षणनिरुपाधिकभेदभिन्नाश्चेतनाः । इति । तत्र प्रथमपक्षं खण्डयति—**बुद्ध्यादिभ्य इति** । **चक्षुर्बुद्ध्यादीति** । चक्षुर्बुद्ध्यादीनां समाहारः समुदायस्तत्संतानं प्रवाहस्तथाहंकारममत्वादयो ये विपरीतप्रत्ययास्तेषां प्रबन्धस्य सातत्यस्य योऽविच्छेदः स लक्षणं यस्य तत्स्वरूपः । चक्षुर्बुद्ध्यादिप्रवाहयुतोऽहंकारममत्वादिसातत्यविशिष्ट इत्यर्थः । नित्यशुद्धबुद्धमुक्तविज्ञानात्मा गर्भे यस्य । ईश्वरात्मनात्मवानित्यर्थः । नित्यविज्ञानेनेश्वरगतेनावभासः प्रकाशो यस्य । **चित्तचैत्येति** । चित्तं—ज्ञानं, चैत्याः—सुखादयः । बीजं—अविद्यादि । बीजि-शरीरम् । एतत्स्वभावः—एतत्स्वरूपः । सच न वास्तव इत्याह—**कल्पित इति** । **अभ्युपगम्यत इति** । कल्पितत्वेन स्वीक्रियते न वास्तवः । यस्य पूर्वोक्तकल्पितविशेषणाविशिष्टरूपस्याविच्छेदे सातत्ये तत्प्रविष्टचित्स्वरूपस्य संसारव्यवहारो यस्य च विच्छेदे प्रतिबिम्बरूपस्य बिम्बसंपत्त्या मोक्षव्यवहारो भवति सच कल्पितरूपः सिद्धान्तिना पूर्वमेव कल्प्यते तस्यैव पुनःकल्पने सिद्धसाधनमिति भावः । सिद्धसाधनं च पिष्टपेषणवान्निरर्थकमिति तात्पर्यम् । द्वितीयपक्षेऽपि सिद्धसाधनमेवेत्याह-**अन्यश्चेति** । देवादीनां शरीरमाकाशादिभूतारब्धं तल्लयश्च मृत्तिकादिलयवत्प्रत्यक्ष इत्यर्थः । **ईदृशं** भूतारब्धत्वादिकं सिद्धान्तिना व्यवहारनिर्वाहायांगीकृतमेव तत इदमपि सिद्धसाधनदोषघटितम् । चतुर्थप्रकारस्तु न संभवतीत्याह—

**न पुनश्चतुर्थ इति** । चतुर्थः—चतुर्थप्रकारकस्तु जीवो नांगीक्रियत इत्यर्थः । ननु तृतीयो यः प्रकारस्तद्रीत्या बुद्ध्यादिकल्पितेभ्यो विशिष्टात्मभ्यो व्यतिरेकेण निरूपाधिकस्वरूपाभिप्रायेण लक्षणभेदादिति हेतुः स्यादत आह—**आश्रयासिद्धो हेतुरिति** । अत्र हेतावाश्रयासिद्धिरूपो दोषः । यथा काञ्चनमयः पर्वतो वन्हिमानिति गगनारविन्दं सुरभीति वा न साधयितुं शक्यते काञ्चनमयपर्वतस्य गगनारविन्दस्य चाभावात्तथा बुद्ध्यादिकल्पित आत्मा लक्षणभेदादीश्वराद्भिन्न इत्यपि न साधयितुं शक्यते । पक्षस्य कल्पितत्वेनासिद्धत्वात् । तदाह—**ईश्वरादन्यस्येति** । **ईश्वरस्यैवेति**।ईश्वरस्यैव विरुद्धलक्षणत्वमयुक्तं सुखदुःखादियोगश्चापि तस्यायुक्त इति चेन्नेति संबन्धः । ईश्वरात्पृथगात्मा नास्तीति वदता वादिनेश्वर एवात्मेति साधितं ततश्चासंगस्य तस्य बद्धत्वमुक्तत्वादि विरुद्धधर्मत्वं सुखदुःखादियोगश्च कथं संगच्छेतेति शंका । सैव न निमित्तत्व इत्युत्तरेण परिन्हियते । **लोकविपर्ययाध्यारोपणादिति** । लोकैः प्राकृतदर्शिभिर्विपर्ययेण दृष्टिविपर्ययेण यदध्यारोपणमध्यारोपस्तन्निमित्तं बद्धत्वादिधर्माः सुखदुःखादियोगश्चेति भावः । तद्विवृणोति—**यथा हीत्यादिना** । सदा प्रकाशस्वरूपेऽपि सूर्ये स्वनेत्रगतप्रकाशाभिव्यक्त्यनभिव्यक्तिनिमित्तमुदयास्तमयावहोरात्रयोः कर्तृत्वं चाध्यारोप्यते लोकैस्तदध्यारोपनिमित्तं सोऽपि सूर्यो मिथ्यैव तत्काल्पितकर्तृत्वभाग्भवति तद्वदीश्वरोऽपि लोकाध्यारोपणाद्बद्धमुक्तत्वादिधर्मभाग्भवति । **लोकज्ञानापोहेति** । लोकस्य यज्ज्ञानं तदपोहो विस्मरणमित्यर्थः । **न स्वत इति** । परमार्थत इत्यर्थः । यथा पित्तामयवान्पुरुष आमयात्प्राक् शुक्लरूपित्वेन निश्चितमपि शङ्खमामयदशायां स्वदृष्ट्यनुसारं पीतमेव मनुते तद्वद्भ्रान्तः स्वबुध्यनुसारमेवाध्यारोपयतीत्याह—**आत्मदृष्ट्यनुरूपारोपाच्चेति** । तदुक्तं हस्तामलकाचार्यैः"घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः॥ तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा॥"ह. १० दार्ष्टान्तिके योजयति—**एवमिति** बुध्यादिसंबंधिनीनां वृत्तीनामुद्भवाभिभवाभ्यामाकुलस्य " इमावुद्भवाभिभवौ न वृत्तीनां किन्तु तद्व्यापकचैतन्यस्य" इति मिथ्याप्रत्ययप्रयुक्तस्य भ्रान्तस्य पुरुषस्य भ्रान्त्या सुखदुःखादियोग आरोपितो न तु वास्तव इत्यर्थः। [पृ. ३२]**एतेनेति** । सिद्धसाधनाश्रयासिद्धत्वदोषाभ्यां जीवेश्वरयोः सौक्ष्म्यादिसाम्यान्नास्ति किमपि तयोर्भेदे कारणमित्याह—**सौक्ष्म्येति** । एकस्य दुःखमन्यस्य सुखमिति व्यवस्थासिध्यर्थं तात्त्विक आ-

**श्रय**भेदः कल्प्यते तेन कथं भेदे कारणाभाव इति चेन्न । तथाश्रयभेदकल्पने विक्रियावत्त्वप्रसंगस्ततश्चानित्यत्वं प्रसज्येतेत्याह-**विक्रियावत्त्व इत्यादिना।** **मोक्षे** विक्रियावत्त्वं तु केनापि नांगीक्रियते । सर्वैरेव स्वरूपावस्थानं मोक्ष इत्यस्यांगीकारादित्याह–**मोक्षे चेति** । **अविद्यावदुपलभ्यत्वादिति** । अविद्यावद्भिर्भ्रान्तैर्भेदो जाग्रत्स्वप्नयोरुपलभ्यते भ्रान्त्यभावे सुषुप्तिसमाध्योः स भेदो नोपलभ्यतेऽतस्तस्य मिथ्यात्वमित्यर्थः। **तत्क्षय इति** । अविद्यायाः क्षये । केवलस्यात्मनो बन्धमोक्षाविति किमर्थमुच्यते बुध्यादिविशिष्टस्य तौ कुतो नोच्येते इत्याह–**स्वरूपापेक्षत्वादिति** । विशिष्टस्य मोक्षेऽन्वयासंभवात् । मोक्षे बुध्यादिसंबन्धस्य सर्वैरनादृतत्वात्स्वरूपावस्थानं मुक्तिरित्यस्यैव स्वीकाराच्च। तदुक्तं “ उपाधिना सार्धमुपाधिजन्यमौपाधिकं सर्वमवेहि मिथ्या । भागं मृषा चित्प्रतिबिम्बकेऽपि बिम्बं पुनः सत्यमशेषमेव॥ इति ।**जगत्स्थितिपरिपिपालयिषयेति** । परिपालयितुमिच्छा परिपिपालयिषा । जगतः स्थितिकरणं ब्रह्मण इष्टं प्राणिकर्मफलविभागार्थम् । देवाश्चात्मानुशासनानुवर्तिनो दैत्याश्च जगत्स्थितिकारियज्ञाद्यपहारिणोऽतो यथाक्रमं तेषां जयपराजयौ ॥ ३ ॥१॥

( प्रकाशिका ) [ पृ. २७ ] **कांचनाख्यायिकामिति** । अत्र कांचनेत्यनिश्चिततद्योतकपदेनाख्यायिकायां न तात्पर्यं किन्तु साकल्येन ब्रह्म विज्ञातुमशक्यमित्यत्र तात्पर्यमिति द्योत्यते । **देवानाविश्येति** । देवशरीराणि प्रविश्य ॥३॥ १ ॥

तृतीयखण्डे द्वितीयमन्त्रः॥ ३ ॥ २ ॥

( पदभाष्यम् ) [ पृ. ३३ ] **स्वयोगमाहात्म्यनिर्मितेनेति** । योगो नाम सत्त्वरजस्तमसां घटनं माया तत्सामर्थ्यादित्यर्थः । ब्रह्मणः शरीरं योगजन्यं प्राणिशरीरवत्सुकृतादेस्तच्छरीरसाधनत्वाभावात् । **यक्षमिति** ‘ यज देवपूजासंगतिकरणदानेषु ’ इति धातोर्यक्षमिति रूपमत आह–**पूज्यमिति** ३ ॥ २ ॥

( वाक्यभाष्यम् ) [ पृ. ३३ ] **हेयत्वख्यापनार्थमिति** । मिथ्याभिमानो हेय इति द्योतयितुम् । **पिण्डमात्राभिमाना इति** । केवलं देहाभिमानिनः । शातनं–निराकरणम् । अनुजिघृक्षा–अनुगृहीतुमिच्छा । **नातिदूर इति** । समीप एवेत्यर्थः । **मायोपात्तेनेति** । देवगर्वनिरासाय

केवलं मायिकमेव तद्रूपं नतु वास्तवमित्यर्थ ॥३॥२।३।४।५।६।७।८
९।१०।११॥

( प्रकाशिका ) [ पृ. ३३ ] **तदासुरावेशेत्यादि** । यत्राहंकारादि-प्रादुर्भावस्तत्रासुरकृतशरीरप्रवेशाद्ज्ञानमुत्पन्नामिति भावः ॥३।२।३।४।५।६।७।८।९।१०।११।१२॥

तृतीयखण्डे तृतीयमन्त्रः ॥३॥३॥

( पद्भाष्यम् ) [ पृ. ३३ ] **अग्रगामिनमिति** । " अग्निमुखा वै देवाः " इति श्रुतेः । **सर्वज्ञकल्पमिति** । " ईषदसमाप्तौ कल्पब्देश्यदेशीयराः " पा सू. ५।३।६७ इति सूत्रेण कल्पप्प्रत्ययः । किंचिन्न्यूनः सर्वज्ञः सर्वज्ञकल्पः । महतो यक्षस्याज्ञानादग्नेर्ज्ञाने न्यूनता प्रदर्शिता । [पृ.३४] **सर्वत्रेति** । अयमभिप्रायो यदीदं तृणं त्वया दग्धुं न शक्येत तर्ह्येतत्सामान्यादन्यत्र या दहनशक्तिः सा न त्वदीया किन्तु त्वदितरस्यातो दग्धृत्वाभिमानं त्यज ॥३।३।४।५।६॥

तृतीयखण्डे सप्तममन्त्रः ३ ॥ ७ ॥

( पद्भाष्यम् ) [ पृ. ३५ ] ' वा गतिगन्धनयोः ' इत्यस्य वायुरिति रूपमित्याह—**वानादित्यादि** । **श्वयतीति** । वर्धत इत्यर्थः । टुओश्वि गतिवृद्ध्योरिति पाणिन्यनुशासनात् ॥७।८।९।१०॥

तृतीयखण्ड एकादशमन्त्रः ॥ ३ ॥ ११ ॥

( पद्भाष्यम् ) [ पृ. ३६ ] **अतितरामिति** । अतीत्युपसर्गात्तरबन्तादामुप्रत्ययः । अत्यन्तमित्यर्थः ॥ ३ ॥ ११ ॥

तृतीयखण्डे द्वादशमन्त्रः ३ ॥ १२ ॥

( पद्भाष्यम् ) [ पृ. ३६ ] **ईश्वरेण सहेति** । शरीरार्धभागस्थित्येति भावः ॥ ३।१२॥

( वाक्यभाष्यम् ) [ पृ. ३६ ] **रुद्रपत्नीति** । रुद्रस्य सर्वज्ञत्वात्तत्सहचारिणीत्वेनोमाया अभिप्रायोद्बोधकत्वम् । लौकिकन्यायमाह--**विरूपोऽपीति**॥३।१२॥

इति तृतीयः खण्डः ॥३॥

अथ चतुर्थखण्डे प्रथममन्त्रः ॥ ४ ॥ १ ॥

( पदभाष्यम् ) [ पृ. ३७ ] **क्रियाविशेषणार्थमिति** । अयमर्थः । यो ह्ययं विजयः स ब्रह्मण एव न युष्माकम् ॥ ४ ॥ १ ॥

( प्रकाशिका ) [ पृ. ३७ ] **हेतिनिश्चयमाहेति** । निपातानामनेकार्थत्वादेव । **विजय इति** । ' चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ' इति वन्निमित्तसप्तमीयं तदाह-**विजयनिमित्तमिति** ॥ ४ ॥ १ ॥

चतुर्थखण्डे द्वितीयमन्त्रः ॥ ४ । २ ॥

( पदभाष्यम् ) [ पृ. ३७ ] देवा इत्येतदनुरूपं प्रथमः विदांचकारेत्यस्य विपरिणमनं प्रथमा विदांचक्रुरिति । **नेदिष्ठमिति** अन्तिकशद्बाद्दिष्ठनि रूपम् । "अन्तिकबाढयोर्नेदसाधौ " पा. सू. ५ । ३ । ६३ इत्यनेन साधु ॥ ४ ॥ २ । ३ ॥

( वाक्यभाष्यम् ) [ पृ. ३७ ] **प्रथम इति** । प्रथमामिति क्रियाविशेषणस्यार्थे प्रथम इति । अतस्तथा विपरिणामः । अत्र भाष्य इवशब्दविषये न किंचिल्लिखितं पदभाष्योक्तमिवशब्दो निरर्थक इति द्योतयितुमपि तूष्णींभावः स्यात् ॥४॥२।३।४॥

( प्रकाशिका ) [ पृ. ३७ ] **अतितरामिवेति** । अन्यान्देवानतिक्रामन्तीव । इतरदेवापेक्षयाग्न्याद्यः किंचिदिव श्रेष्ठा इति भावः । **नेदिष्ठं**— अन्तिकतमम् ॥ ४ । २ । ३ ॥

चतुर्थखण्डे चतुर्थमन्त्रः ॥ ४ ॥ ४ ॥

[ पदभाष्यम् ] [ पृ. ३८ ] **अनुपपन्नमिति** । विद्युतः सकाशाद्ब्रह्मद्युतदिवेत्यर्थो नोपपद्यते । ब्रह्मणः स्वयंप्रकाशस्य विद्युतादेः परस्माद्वस्तुनः प्रकाशायोगात् । विद्युत इति षष्ठ्यन्तमपि नोपपद्यते । विद्युत्संबन्धिप्रकाशस्य ब्रह्मनिष्ठत्वायोगात् । यत एकनिष्ठप्रकाशस्यान्याश्रयत्वानुपपत्तिः । अतो विद्युतो विद्योतनं प्रकाश इति कल्पितम् । तदुपमानेन ब्रह्मविद्योतनं बोध्यत उपासनार्थम् । यथा प्रसिद्धालम्बनानुसारं सर्वत्रोपासनं प्रदर्श्यते ।

कं ब्रह्म खं ब्रह्मेत्यादिषु । तथात्रापि विद्युतः प्रकाशनं सर्वैर्ज्ञायमानमालम्बनीकृत्य तदुपमया ब्रह्मप्रकाशनं ध्येयमेवमुपासनार्थं बोध्यते । **प्रतिनिर्देशार्थ इति** । उपास्यरूपपरामर्शार्थः । अयं भावः । इतिशब्देन यदेतद्विद्युतो व्यद्युतदा ३ इतीगत्येवोपासनेति प्रदर्श्यते । तथैव न्यमीमिषदा ३ इत्यत्रापीतिशब्दस्तदर्थो ज्ञेयः । **समुच्चयार्थ इति** । एवं च द्विरूपोपासना । प्रथमोपासनयेदं साध्यं—यद्ध्येयं ब्रह्म तद्यथा विद्युतः प्रकाशो युगपद्विश्वव्यापकस्तथा निरतिशयज्योतीरूपमिति ज्ञेयम् । द्वितीयोपासनयेदं साध्यं—यद्यथा चक्षुषो निमेषणं द्रुतं तद्वद्ब्रह्म द्रुतं सृष्ट्यादिकार्यतः पारमैश्वर्यसंपन्नमिति ज्ञेयम् । **स्वार्थे णिजिति** । तेन न प्रयोजकरूपोऽर्थः ॥ ४ ॥ ४ ॥

[ प्रकाशिका ] [ पृ. ३९ ] विद्युदादीनित्यर्थस्योपपत्तिमाह—**विद्युतो बहुवचनमिति** । बहुवचनप्रयोगाद्विद्युदादय उपलक्षयितव्याः । आङभिव्याप्त्यर्थको ग्राह्य इत्याह—**आपूर्णमिति** । **यद्वेति** । अयं द्वितीयोऽर्थः शांकरभाष्यवद् दृश्यते ॥ ४ ॥ ४ ॥

चतुर्थखण्डे पञ्चममन्त्रः ॥ ४ ॥ ५ ॥

[ पदभाष्यम् ] [ पृ. ३९ ] प्रत्यगात्मतया ब्रह्माभिव्यक्त्यर्थमध्यात्ममुपासनमाह—**अथेति** । मदीयं मनोऽधिदैवतोपासनायां प्रकृतं यज्ज्योतीरूपं ब्रह्म तत्र गच्छति इति चिन्तयेदयमुपदेश आध्यात्मिक इत्यर्थः । पुनः पुनर्जायमानो मन्मनसः संकल्पो ब्रह्मविषय एवेति ध्यानेनोपासकस्य प्रत्यग्भूतब्रह्माभिव्यक्तिः स्यादित्याह—**मनउपाधिकत्वाद्धीति** । **ब्रह्मविषयीक्रियमाण इति** । एतत्संकल्प इत्यस्य विशेषणम् ॥ ४ ॥ ५ ॥

[ वाक्यभाष्यम् ] [ पृ. ४० ] अहंग्रहेणैवैतदुपासनं कर्तव्यमित्यभिप्रेत्याध्यात्मिकब्रह्मस्वरूपं वक्ति—**आत्मभूतत्वाच्चेति** ॥ ४ ॥ ५ ॥

[ प्रकाशिका ] [ पृ. ४० ] **इयत्तयेति** । एतत्प्रमाणकं वस्त्विति न विषयीकरोति । **शब्दस्वभावाद्वेति** । संकल्पशब्दस्य गुणाः पूजास्थानमिति वदजहल्लिंगत्वात् ॥ ४ ॥ ५ ॥

चतुर्थखण्डे षष्ठमन्त्रः ॥ ४ ॥ ६ ॥

[ पदभाष्यम् ] [ पृ. ४१ ] **उवाचेति** । सगुणोपासनस्यैश्वर्यरूपं फलं

प्रतिपादितं तत्र यो विरक्त उत्तमाधिकारी शिष्यः स आचार्यं परमरहस्यं पृष्टवानित्यर्थः ॥ ४ ॥ ६ ॥

[ वाक्यभाष्यम् ] [ पृ. ४४ ] **वनतेस्तत्कर्मण इति ।** वनु संभजन इत्यस्य रूपं तेन वनु धातुः संभजनकर्मा । संभजनार्थक इति यावत् । **गौणमिति ।** गुणादागतं गौणं यौगिकं न रूढमित्यर्थः । **सेवन्ते स्मेति ।** अत्र स्मेतिपदं निरर्थकं केवलं वाक्यालंकारकं भूतकालवाचिनोऽर्थस्येहानन्वितत्वात् ॥ ४ ॥ ६ ॥

[ प्रकाशिका ] [पृ.४०] **अन्वर्थमिति ।** अर्थमनुगतं यथार्थम् । **ततत्वादिति ।** तनु विस्तारे इत्यस्य [ पृ. ४४ ] वनु संभक्तावित्यस्य च रूपम् । तथा च तद्वनमितिशब्दस्य व्यापकं भजनीयं चेत्यर्थः । तद्विशदयति—**तनोतेरिति । इत्यत्प्रत्यय इति ।** व्याकरणान्तरस्थं वचनमेतत् । **वनतेरकार इति ।** वनेत्यकारान्तशब्दः कथमपि साध्य इत्यर्थः ॥ ४ ॥ ६ ॥

चतुर्थखण्डे सप्तममन्त्रः ॥ ४ ॥ ७ ॥

( पदभाष्यम् ) [ पृ. ४१ ] **उत्तरार्थमिति ।** श्रोत्रस्य श्रोत्रमित्यनेनोक्तोपनिषत् । सैवेदानी मयोक्तेति शिष्यं प्रत्याचार्योऽवधारणपूर्वकं निर्दिशति विद्याप्राप्त्युपायानामुत्तरेषां तपआदीनां विधानार्थम् । अतो न पुनरुक्तिः । विद्यातु निरपेक्षैवातः सा प्रथममुक्ता । तपआदिसाधनविधानार्थमेवोक्तविद्याया अवधारणमिति प्रश्नमुखेन स्फुटयति—**परमात्मविषयामिति । फलवचनेनोपसंहार इति ।** संपूर्णतया विद्याया अनुक्तौ फलकथनमसंगतं भवेदित्यर्थः । **तस्मादिति ।** उपनिषच्छेषः—उपनिषदङ्गम् । अनवशेषितत्वात्—समापितत्वात् । **किं पूर्वोक्तेति ।** श्रोत्रस्य श्रोत्रमित्याद्युपनिषदङ्गत्वेनान्यानि सहकारिसाधनान्यपेक्षते नो वा । **पिप्पलादवदिति ।** प्रश्नोपनिषदीयमाख्यायिका—सुकेशादयः षण्महर्षयो ब्रह्मान्वेषणं कुर्वन्तः पिप्पलादमहर्षिं समुपसन्नाः । तान्स पिप्पलादो ब्रह्मविषयमुपदिदेश । अन्ते चैतावदेवाहं ब्रह्म वेद नातः परमस्तीत्युवाच । तद्वदत्राप्याचार्येण नातः परमस्तीति वक्तव्यमित्यर्थः । समाधत्ते—**एतदुपपन्नमिति ।** [ पृ. ४२ ] **वेदैरिति ।** अयमर्थः । तस्यै तपो दम इति मन्त्रे वेदानां तदङ्गानां च तपआदिभिः सह पाठः कृतः परं वेदास्तदङ्गानि च न ब्रह्मविद्याप्राप्त्युपायभूतानि तत्सामान्यात्तपआदीन्यपि न ब्रह्मविद्याप्राप्त्युपायभूतानि । योग्य-

तानुसारं तपआदीनां ब्रह्मविद्याप्राप्तावङ्गाङ्गिभावः कल्प्यते सहपाठोऽकिंचित्कर इति शंकते—**सहपठितानामपीति**। एवं विभागपूर्वकं विनियोगः कर्तव्यस्तथा चार्थसंबन्ध उपपद्येत। स च विभाग इत्थम्। तपःप्रभृतीनां विद्यांगत्वेन विनियोगः। वेदानां तदंगानां चार्थप्रकाशद्वारा कर्मात्मज्ञानोपायत्वम्। एवं सहकथनेऽपि पृथग्विनियोगे श्रौतं दृष्टान्तमाह—**यथा सूक्तवाकानुमन्त्रणमन्त्राणामिति**। "अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यादिनैव सूक्तवाकेन सर्वयागसमाप्तौ देवतानुमंत्रणं क्रियते। यद्यप्यस्मिन्सूक्तवाके बह्व्यो देवताः पठ्यन्ते तथापि यस्मिन्यागे या देवताहूता तस्या एव विसर्जने योग्यतावशात्तस्य सूक्तवाकस्य विनियोगः। सूक्तवाकानुमंत्रणमंत्राणामित्यत्र सूक्तवाकेनानुमंत्रणमिति तृतीयासमासः। **नायुक्तेरिति**। युक्तिर्घटना तस्या असंभवात्। प्राञ्चति—गच्छति। अञ्चु गतिपूजनयोरिति धातोः प्रोपसृष्टस्य रूपम्। सूक्तवाकानुमंत्रणमन्त्रेषु योग्यतायाः सत्त्वात्तथा व्यवस्थायामप्यत्र कर्मणां विद्याविरुद्धत्वेन योग्यताभावात्तथा व्यवस्थाया असंभवादित्यर्थः। तमेव योग्यताभावं स्पष्टयति—**नहीति**। **निःश्रेयसस्येति**। एवं च ब्रह्मविद्यायास्तत्फलस्य कर्मवैलक्षण्यमित्यर्थः। **प्रश्नप्रतिवचनस्येति**। उपनिषदमब्रूमेति गुरूक्तप्रश्नोत्तरवाक्यस्य ॥४॥७॥

(वाक्यभाष्यम्) [पृ. ४१] ब्राह्मीत्यस्य व्याख्यानं—**ब्राह्मणजातेरिति**। ब्राह्मणजात्यनुष्ठेयां विद्यामात्मसाधनभूताम्। [पृ. ४२] अब्रूमेत्यस्य भविष्यकालिकमर्थमङ्गीकुरुते व्यवस्थापयति च—**ब्राह्मी नोक्तेत्यादिना**। **भूताभिप्राय इति**। भूतकालसंबंधिक्रियाविशिष्टोऽत्राब्रूमेति शब्दो न किन्तु भविष्यकालसंबंधिक्रियाविशिष्टः ॥ ४ ॥ ७ ॥

(प्रकाशिका) [पृ. ४२] श्रुतिस्थोत्तरालोचने पक्षत्रयं संभवति तदाह—**किमुपनिषत्प्रतिपाद्यमिति** ॥ ४ ॥ ७ ॥

चतुर्थखण्डेऽष्टममन्त्रः ॥ ४ ॥ ८ ॥

(पदभाष्यम्) [पृ. ४३] **अमृदितकल्मषस्येति**। अविनष्टपातकस्य। **यथेन्द्रेत्यादि**। चतुर्थपर्यायपर्यन्तमिन्द्रस्य प्रजापतिबोधितब्रह्मविषयिणी प्रतिपत्तिर्ज्ञानं नासीत्तस्यैव प्रजापतेर्वाक्याद्विरोचनस्य तु प्रथम एव पर्याये विपरीता देहात्मप्रतिपत्तिरभवादियं कथा छान्दोग्येऽष्टमाध्यायेऽष्टमखण्डेऽस्ति।

**यथाश्रुतमिति** । श्रुत्यनुसारि । **अमानित्वमिति** " अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् " भ. गी. १३।७ इत्यादिभगवद्गीतोक्तम् । **षडिति** । शिक्षा-पाणिन्यादिकृता । कल्पः—श्रौतस्मार्तसूत्रमाश्वलायनादिमुनिकृतम् । व्याकरणं-पाणिनिप्रभृतिनिर्मितम् । निरुक्तं—यास्ककृतम् । छन्दः-पिंगलकृतम् । ज्योतिषं—लगधकृतम् । सर्वांगाणीत्यनेन शिरआद्यवयवग्रहणे शिक्षादीनां ग्रहणं कथमत आह—अस्मिन्पक्ष इति । वेदपदेन शिक्षादिग्रहणे युक्तिमाह—**अंगिनीति** ॥ ४ ॥ ८ ॥

( वाक्यभाष्यम् ) [ पृ. ४२ ] **ब्रह्माश्रयेति** । ब्रह्म वेद आश्रयो ब्रह्मविद्यायाः । वेदमूलत्वात्तस्याः॥ ४ ॥ ८ ॥

( प्रकाशिका ) [ पृ. ४४ ] तप आलोचने इत्यस्य रूपं तप इति मत्वाह—**शास्त्रपर्यालोचनं वेति** । **तदनुकूलग्रन्थाश्चेति** । ऐतरेयशतपथादिब्राह्मणानि । " वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् " या. स्मृ. अ. २।८३ इति याज्ञवल्क्यस्मृतेराह—**अपीडाकरमिति** ॥ ४ ॥ ८ ॥

चतुर्थखण्डे नवममन्त्रः ॥ ४ ॥ ९ ॥

(पदभाष्यम्) [ पृ. ४४ ] **औपचारिक इति** । इतरलोकापेक्षया स्वर्गस्य बहुकालस्थायित्वेन लाक्षणिकोऽनन्तशब्दः स्यादिति शङ्कार्थः ॥४॥९॥

( वाक्यभाष्यम् ) [ पृ. ४४ ] सुखप्राय इत्यनेन सुखबाहुल्यादल्पदुःखात्मकत्वं तस्य लोकस्य भवेत्किंच सुखवैशिष्ट्येन सगुणत्वमपि तस्य स्यादत आह—**निर्दुःखात्मनीति** । सुखप्राय इत्यस्य दुःखाभावे तात्पर्यमिति भावः ॥ ४ ॥ ९ ॥

( प्रकाशिका ) [ पृ. ४६ ] **त्रिविधपरिच्छेदरहित इति** । देशतः कालतो वस्तुत इति त्रिविधः परिच्छेदस्तद्रहिते । **उक्तसर्वावधारणार्थेति** । ग्रन्थसमाप्तिद्योतिकेति तात्पर्यम् ॥ ४ ॥ ९ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीकेनोपनिषद्व्याख्यात्रयबालबोधिनी पाठकोपाव्हश्रीधरशास्त्रिकृता समाप्तिमयासीत् ॥

---

# उपनिषद्व्याख्यात्रयगतानां वचसां सूचिः

## केनोपनिषत्पदभाष्ये लब्धस्थलानि वचांसि


पृ.

अत्र ब्रह्म समश्नुते क. ६।१४ १०

अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् छा. ५।१०।८ २

अविज्ञातं विजानतां विज्ञातमविजानताम्. के. २।११ २७

अमुं यजामुं यज. बृ. १।४।६ १४

अयमात्मा ब्रह्म. बृ. २।१९ १२

अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्. क. ३।१५ १८

अन्यदेव तद्विदितादथो अविदितादधि. के. १।३ २०

असङ्गो नहि सज्यते. बृ. ३।९।२६ २३

असक्तं सर्वभृत् भ.गी. १३।१४ २४

आवृत्तचक्षुरमृतत्वमिच्छन् क. ४।१ १०

आचार्यवान् पुरुषो वेद. छा. ६।१४।२ ४

आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्. छा. ४।९।३ ४

आत्मनैवायं ज्योतिषास्ते. बृ. ४।३।६ ८

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति. क. ५।३ ९

को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात् . तै. २।७।१ ९

किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः बृ. ४।४।२२ ३

कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव. बृ. १।५।३ १९

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत. भ. गी.१३।३३ ८

जाया मे स्यात्. बृ. १।४।१७ ३

तत्र को मोहः कः शोक एकत्वमनुपश्यतः. ई. ७ २

तरति शोकमात्मवित्. छा. ७।१।३ २

| | | पृ |
|---|---|---|
| तद्विद्धि प्रणिपातेन. | भ. गी. ४।३१ | ४ |
| तस्य भासा सर्वमिदं विभाति. | क. ५।१५ | ८ |
| न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः | म. ना. १०।५ | १० |
| न येषु जिह्ममनृतं न माया. | प्र. १।१६ | ४३ |
| नहि वक्तुर्वक्तेर्विपरिलोपो विद्यते. | बृ. ४।३।२६ | १५ |
| नैषा तर्केण मतिरापनेया. | क. २।९ | ४ |
| नित्यो नित्यानां चेतनश्चेतनानाम्. | क. ५।१३ | ८ |
| नान्यदतोऽस्ति विज्ञातृ. | बृ. ३।८।११ | १७ |
| नित्यं विभुं सर्वगतम्. | मुं. १।१ | २४ |
| नायमात्मा बलहीनेन लभ्यः | मुं. ३।२।४ | २५ |
| पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्. | क. ४।१ | २–२०–१० |
| प्रज्ञानं ब्रह्म. | ऐ. ५।३ | १८ |
| परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्. | मुं. १।२।१२ | २ |
| पुत्रेणायं लोको जय्यो नान्येन कर्मणा। कर्मणा पितृलोको विद्यया देवलोकः. | बृ. १।५।१६ | ३ |
| भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ | मुं. २।२।८ | २ |
| यदा सर्वे प्रमुच्यन्ते. | बृ. ४।४।७ | १० |
| येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धि. | के. १।८। | ९ |
| यथा सकृद् विद्युतम्. | बृ. २।३।६ | ३८ |
| य आत्मा सर्वान्तरः | बृ. ३।४।१ | १३ |
| यत्साक्षादपरोक्षाद् ब्रह्म. | बृ. ४।३।१ | १३ |
| य आत्मापहतपाप्मा. | छा. ८।७।१ | १२ |

पृ.

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृत-
मभयमेतद्ब्रह्म. छा. ४।१५।१ १७
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता
ह्यर्थाः प्रकाशन्ते महात्मनः. श्वे. ६।२३ ४३
वदन्वाक् । यो वाचमन्तरा यमयति. बृ. १।४।७ १९
विज्ञानघन एव बृ. ३।४।१२ १८
विज्ञानमानन्दं ब्रह्म. बृ. ३।९।२८ १८–२३
स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति. मुं. ३।२।९ २६
स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयः. बृ. ४।२२ २४
सत्यं ज्ञानमनन्तम्. तै. २।१।१ १८
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम. भ. गी. १०।१५ २४

## केनोपनिषत्पदभाष्येऽलब्धस्थलानि वचांसि.

अकारो वै सर्वा वाक् सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना
बह्वी नानारूपा भवति. १४
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेध-
सहस्राच्च सत्यमेकं विशिष्यते. स्मृतिः ४३
आत्मनैवात्मानं पश्यति. २४
गुणवद्गुणवता संसृज्यते नातुल्यजातीयम्. २४
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । स्मृतिः ४३
दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता. २३
प्रजा ह तिस्रो अत्यायमीयुः २
मोक्षमिच्छन् सदा कर्म त्यजेदेव ससाधनम्. । त्यजतैव
हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम्. स्मृतिः ४२
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्. ८
येन सूर्यस्तपति तेजसेद्धः. ८
वाक् पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित् तां वेद
ब्राह्मणः. १५
सा वाग्यया स्वप्ने भाषते. १५

## केनोपनिषद्वाक्यभाष्ये लब्धस्थलानि वचांसि.


| | | पृ. |
|---|---|---|
| अमृतत्वं हि विन्दते. | के. १।२।१८ | ४ |
| अविकार्योऽयमुच्यते. | भ. गी. २।२५ | ४ |
| अनश्नन्नन्यो अभिचाकशीति. | मुं. ३।१।२ | २९ |
| आत्मानमेवावेत्. | बृ. १।४।१० | १२ |
| उपासीत. | छा. ३।१४।१ | ३० |
| एतस्य वा अक्षरस्य प्रशासने. | बृ. ३।८।९ | २९ |
| एतं वै तमात्मानं विदित्वा. | बृ. ३।५।१ | १२ |
| कामान्यः कामयते. | मुं. ३।२।२ | २ |
| क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति. | भ. गी. १३।३३ | १६ |
| जरामृत्युमत्येति. | बृ. ३।५।१ | २९ |
| तदेव ब्रह्म त्वं विद्धि नेदं यदिदम्. | के. १।४ | २ |
| तस्य भासा. | मुं. २।२।१८ | १६ |
| तत्त्वमसि. | छा. ६।८।७ | १२–३० |
| ते क्षय्यलोका भवन्ति. | छा. ७।२५।२ | ३१ |
| त्यागेनैके. | म. ना. १०।५ | ४ |
| न वर्धते कर्मणा. | बृ. ४।४।२३ | ४ |
| न लिप्यते लोकदुःखेन बाह्यः | क. ५।११ | २९ |
| नादत्ते कस्यचित् पापम्. | भ. गी. ५।१५ | ३२ |
| नान्यदतोऽस्ति विज्ञातृ. | बृ. ३।८।११ | ३० |
| नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता. | बृ. ३।७।२३ | ३० |
| नान्यः पन्था विद्यते. | श्वे. ३।८ | ४ |
| नायमात्मा बलहीनेन लभ्यः. | मुं. ३।२।४ | २५ |
| पुण्यो वै पुण्येन. | बृ. ३।२।१३ | ३० |
| प्रत्यगात्मानमैक्षत. | क. ४।१ | २३ |
| मत्तः स्मृतिर्ज्ञानमपोहनं च. | भ. गी. १५।१५ | ३१ |
| यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्. | भ. गी. १८।५ | ३ |
| मृत्योः स मृत्युमाप्नोति. | बृ. ४।४।१९ | ३१ |
| यत्साक्षादपरोक्षात्. | बृ. ३।४।१ | ३० |